॥ ततः प्रविशति कामयमानावस्थो राजा ॥

राजा । सचिन्ताकुलं ।

जाने तपसो वीर्यं सा बाला परवतीति मे विदितं ।
अलमस्मि ततो हृदयं तथापि नेदं निवर्तयितुं ॥ ५३ ॥

मदनबाधां निरूप्य । सासूयं । भगवन्कुसुमायुध । त्वया चन्द्रमसा च विश्वसनीयाभ्यामतिसंधीयते कामिजनसार्थः । कुतः ।

तव कुसुमशरत्वं शीतरश्मित्वमिन्दो
र्द्वयमिदमयथार्थं दृश्यते मद्विधेषु ।
विसृजति हिमगर्भैरग्निमिन्दुर्मयूखै
स्त्वमपि कुसुमबाणान्वज्रसारीकरोषि ॥ ५४ ॥

सखेदं परिक्रम्य । क्व नु खलु संस्थिते कर्मणि सदस्यैरनुज्ञातः श्रमक्लान्तमात्मानं विनोदयामि । निःश्वस्य । किं नु खलु मे प्रियादर्शनादृते शरणमन्यत् । यावदेनामन्विष्यामि । सूर्यमवलोक्य । इमामुग्रातपां वेलां प्रायेण लतावलयवत्सु मालिनीतीरेषु ससखीजना शकुन्तला गमयति । तत्रैव तावद्गच्छामि । परिक्रम्य । संस्पर्शं रूपयित्वा । अहो प्रवातसुभगो ऽयमुद्देशः ।

शक्यमरविन्दसुरभिः कणवाही मालिनीतरंगाणां ।
अङ्गैरनङ्गतप्तैरविरलमालिङ्गितुं पवनः ॥ ५५ ॥

परिक्रम्यावलोक्य च । अस्मिन्वेतसपरिक्षिप्ते लतामण्डपे संनिहितया तया भवितव्यं । तथा हि । अधो विलोक्य ।

अभ्युन्नता पुरस्तादवगाढा जघनगौरवात्पश्चात् ।
द्वारे ऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यते ऽभिनवा ॥ ५६ ॥

यावद्विटपान्तरेणावलोकयामि । परिक्रम्य । तथा कृत्वा । सहर्षं । अये लब्धं नेत्रनिर्वाणं । एषा मे मनोरथप्रियतमा सकुसुमास्तरणं शिलापट्टमधिशयाना सखीभ्यामन्वास्यते । भवतु । श्रोष्याम्यासां विश्रम्भकथितानि । इति विलोकयन्स्थितः ।

॥ ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला ॥

॥ सख्यावुपवीजयतः ॥

सख्यौ । उपवीज्य । सस्नेहं । हला सउन्दले । अबि सुहअदि दे णलिणीपत्तवादो ।

शकुन्तला । किं वीजअन्ति मं सहीओ ।

॥ सख्यौ विषादं नाटयित्वा परस्परमवलोकयतः ॥

राजा । बलवदस्वस्थशरीरा शकुन्तला दृश्यते । सवितर्कं । तत्किमयमातपदोषः स्यात् । उत यथा मे मनसि वर्तते । साभिलाषं निर्वर्ण्य । अथवा । कृतं संदेहेन ।

स्तनन्यस्तोशीरं शिथिलितमृणालैकवलयं
प्रियायाः साबाधं किमपि रमणीयं वपुरिदं ।
समस्तापः कामं मनसिजनिदाघप्रसरयो
र्न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु ॥ ५७ ॥

प्रियंवदा । जनान्तिकं । अणसूए । तस्स राएसिणो पढमदंसणादो आरहिअ पज्जुस्सुआ विअ सउन्दला । किं णुक्खु से तण्णिमित्तो अअं आतङ्को भवे ।

अनसूया । सहि । ममबि ईदिसी आसङ्का हिअअस्स । होदु । पुच्छिस्सं दाव णं । प्रकाशं । सहि । पुच्छिदव्वासि किंपि । बलिअंक्खु दे संदाबो ।

शकुन्तला । पूर्वार्धेन पुष्पशय्यामुदस्य । हला । किं वत्तुकामासि ।

अनसूया । हला सउन्दले । अणब्भन्तरा खु अम्हे मदणगदस्स वुत्तन्तस्स । किंदु । जादिसी इदिहासणिबन्धेसु कामअमाणाणं अवत्था सुणीअदि । तादिसिं दे पेक्खामि । कहेहि । किं णिमित्तं दे संदावो । विआरंक्खु परमत्थदो अजाणिअ अणारम्भो पडिआरस्स ।

राजा । अनसूयामप्यनुगतो मदीयस्तर्कः । न हि स्वाभिप्रायेण मे दर्शनं ।

शकुन्तला । आत्मगतं । बलिअंक्खु मे अहिणिवेसो दाणिंपि । सहसा एदाणं ण सक्कुणोमि णिवेदिदुं ।

प्रियंवदा । सहि सउन्दले । सुट्ठु एसा भणादि । किं अत्तणो आतङ्कं उबेक्खसि । अणुदिअहंक्खु परिहीअसि अङ्गेहिं । केवलं लावण्णमई छाआ तुमं ण मुञ्चदि ।

राजा । अवितथमाह प्रियंवदा । तथा हि

क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं
मध्यः क्लान्ततरः प्रकामविनतावंसौ छविः पाण्डुरा ।
शोच्या च प्रियदर्शना च मदनक्लिष्टेयमालक्ष्यते
पत्राणामिव शोषणेन मरुता स्पृष्टा लतामाधवी ॥ ५८ ॥

शकुन्तला । सहि । कस्स वा अण्णस्स कहइस्सं । आआसइत्तिआ दाणिं वो भविस्सं ।

उभे । अदो एव्वक्खु णिब्बन्धो । सिणिद्धजणसंविभत्तं हि दुक्खं सज्झवेदणं होदि ।

राजा ।

पृष्टा जनेन समदुःखसुखेन बाला
नेयं न वक्ष्यति मनोगतमाधिहेतुं ।
दृष्टो विवृत्य बहुशो ऽप्यनया सतृष्ण
मत्रान्तरे श्रवणकातरतां गतो ऽस्मि ॥ ५९ ॥

शकुन्तला । सहि । जदो पहुदि मम दंसणपहं आअदो सो तबोवणरक्खिदा राएसी । तदो आरहिअ तग्गदेण अहिलासेण एतदवत्थम्हि संवुत्ता ।

राजा । सहर्षं । श्रुतं श्रोतव्यं ।

स्मर एव तापहेतुर्निर्वापयिता स एव मे जातः ।
दिवस इवार्धश्यामस्तपात्यये जीवलोकस्य ॥ ६० ॥

शकुन्तला । तं जइ वो अणुमदं । तह वट्टह । जह तस्स राएसिणो अणुकम्पणिज्जा होमि । अण्णहा अवस्सं सिञ्चह मे तिलोदअं ।

राजा । संशयच्छेदि वचनं ।

प्रियंवदा । जनान्तिकं । अणसूए । दूरगअमम्महा अक्खमा इअं कालहरणस्स । जस्सिं बद्धभावा एसा । सो ललामभूदो पोरवाणं । ता जुत्तं से अहिलासो अहिनन्दिदुं ।

अनसूया । तह । जह भणासि ।

प्रियंवदा । प्रकाशं । सहि । दिट्ठिआ । अणुरूबो से अहिणिवेसो । साअरं वज्जिअ कहिं वा महाणई ओदरइ । को दाणिं सहआरं अन्तरेण अदिमुत्तलदं पल्लविदं सहेदि ।

राजा । किमत्र चित्रं । यदि विशाखे शशाङ्कलेखामनुवर्तेते ।

अनसूया । को उण उबाओ भवे । जेण अविलम्बिअं णिहुअं अ सहीए मणोरहं संपादेम्ह ।

प्रियंवदा । णिकुञ्जंत्ति चिन्तणिज्जं भवे । सिग्घंत्ति सुश्रं ।

अनसूया । कहं विश्र ।

प्रियंवदा । णं सो राएसी इमस्सिं सिणिद्धदिट्ठीए सूइदाहिला सो । इमाइं दिश्रहाइं पज्जाश्ररकिसो लक्खीश्रदि ।

राजा । सत्यमित्थंभूत एवास्मि । तथा हि

इदमशिशिरैरन्तस्तापाद्विवर्णमणीकृतं
निशि निशि भुजन्यस्तापाङ्गप्रसारिभिरश्रुभिः ।
अनभिलुलितज्याघाताङ्कं मुहुर्मणिबन्धना
त्कनकवलयं स्रस्तं स्रस्तं मया प्रतिसार्यते ॥ ६१ ॥

प्रियंवदा । विचिन्त्य । हला । मश्रनलेहो से करीश्रदु । इमं देवसेसाबदेसेण सुमणोगोबिदं करिश्र से हत्थश्रं पाबइस्सं ।

अनसूया । रोश्रइ मे सुउमारो पश्रोश्रो । किं वा सउन्दला भणादि ।

शकुन्तला । को णिश्रोश्रो विकप्पीश्रदि ।

प्रियंवदा । तेण हि श्रत्तणो उबणासपुव्वं चिन्तेहि दाव किंपि ललिश्रपदबन्धणं ।

शकुन्तला । हला । चिन्तेमि श्रहं । श्रवहीरणभीरुश्रं पुणो वेबइ मे हिश्रश्रं ।

राजा । सहर्षं ।

अयं स ते तिष्ठति संगमोत्सुको
विशङ्कसे भीरु यतो ऽवधीरणां ।
लभेत वा प्रार्थयिता न वा श्रियं
श्रिया दुरापः कथमीप्सितो भवेत् ॥ ६२ ॥

सख्यौ । अत्तगुणावमाणिणि । को दाणिं सरीरणिव्वावइत्तिअं सारदिअं जोसिणिं पडन्तेण वारेदि ।

शकुन्तला । सस्मितं । णिओइदा दाणिंम्हि । इत्युपविष्टा चिन्तयति ।

राजा । स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि । यतः

उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः ।
कण्टकितेन प्रथयति मय्यनुरागं कपोलेन ॥ ६३ ॥

शकुन्तला । हला । चिन्तिअं मए गीदवत्थु । ण दु संणिहिदाणि उण लेहणसाहणाणि ।

प्रियंवदा । इमस्सिं सुओदरसुउमारे णलिणीपत्ते णहेहिं णिक्खित्तवण्णं करेहि ।

शकुन्तला । यथोक्तं रूपयित्वा । हला । सुणुह दाणिं संगदत्थं ण वेत्ति ।

उभे । अवहिदम्ह ।

शकुन्तला । वाचयति ।

तुज्झ ण आणे हिअअं मम उण कामो दिवावि रत्तिंपि ।
णिग्घिण तवेइ बलिअं तुइ वुत्तमणोरहाइं अङ्गाइं ॥ ६४ ॥

राजा । सहसोपसृत्य ।

तपति तनुगात्रि मदनस्त्वामनिशं मां पुनर्दहत्येव ।
ग्लपयति यथा शशाङ्कं न तथा हि कुमुद्वतीं दिवसः ॥ ६५ ॥

सख्यौ । सहर्षं । साअदं अविलम्बिणो मणोरहस्स ।

॥ शकुन्तलाभ्युत्थातुमिच्छति ॥

राजा । अलमलमायासेन ।

संदष्टकुसुमशयनान्याशुक्लान्तविसभङ्गसुरभीणि ।
गुरुपरितापानि न ते गात्राण्युपचारमर्हन्ति ॥ ६६ ॥

अनसूया । इदो सिलातलेक्कदेसं अलंकरेदु वअस्सो ।

॥ राजोपविशति । शकुन्तला सलज्जं तिष्ठति ॥

प्रियंवदा । दुवेणंपि वो अणोण्णाणुराओ पच्चक्खो । सहीसिणेहो मं उण उत्तवादिणिं करेदि ।

राजा । भद्रे । नैतत्परिहार्यं । विवक्षितं ह्यनुक्तमनुतापं जनयति ।

प्रियंवदा । आवण्णस्स विसअवासिणो अत्तिहरेण रण्णा होदव्वं त्ति एसो वो धम्मो ।

राजा । नास्मात्परं ।

प्रियंवदा । तेण हि इअं णो पिअसही तुमं उद्दिसिअ इमं अवत्थन्तरं भअवदा मअणेण आरोविदा । ता अरुहसि अब्भुववत्तीए जीविदं से अवलम्बिदुं ।

राजा । भद्रे । साधारणो ऽयं प्रणयः । सर्वथानुगृहीतो ऽस्मि ।

शकुन्तला । प्रियंवदामवलोक्य । हला । किं अन्तेउरविरहपज्जुस्सुअस्स राएसिणो उवरोहेण ।

राजा । सुन्दरि ।

इदमनन्यपरायणमन्यथा
हृदयसंनिहिते हृदयं मम ।
यदि समर्थयसे मदिरेक्षणे
मदनबाणहतो ऽस्मि हतः पुनः ॥ ६७ ॥

अनसूया । वअस्स । बहुवल्लहा राआणो सुणीअन्ति । जह

णो पिअसही बन्धुअणसोअणिज्जा ण होइ । तह णिव्वाहेहि ।

राजा । भद्रे । किं बहुना ।

परिग्रहबहुत्वे ऽपि द्वे प्रतिष्ठे कुलस्य मे ।
समुद्रवसना चोर्वी सखी च युवयोरियं ॥ ६८ ॥

उभे । णिव्वुदम्ह ।

प्रियंवदा । सदृष्टिक्षेपं । अणसूए । जह एसो इदो दिण्णदिट्ठी उस्सुओ मिअपोदओ मादरं अण्णेसदि । एहि । संजोएम णं । इत्युभे प्रस्थिते ।

शकुन्तला । हला । असरणम्हि । अण्णदरा वो आअच्छदु ।

उभे । पुहवीए जो सरणं । सो तुह समीवे वट्टइ । इति निष्क्रान्ते ।

शकुन्तला । कहं गदाओ एव्व ।

राजा । अलमावेगेन । नन्वयमाराधयिता जनस्तव समीपे वर्तते ।

किं शीतलैः क्लमविनोदिभिरार्द्रवाता
न्संचारयामि नलिनीदलतालवृन्तैः ॥
अङ्के निधाय करभोरु यथासुखं ते
संवाहयामि चरणावुत पद्मताम्रौ ॥ ६९ ॥

शकुन्तला । ण माणणीएसु अत्ताणं अवराहइस्सं । इत्युत्थाय गन्तुमिच्छति ।

राजा । सुन्दरि । अपरिनिर्वाणो दिवसः । इयं च ते समवस्था ।

उत्सृज्य कुसुमशयनं नलिनीदलकल्पितं स्तनावरणं ।
कथमातपे गमिष्यसि परिबाधापेलवैरङ्गैः ॥ ७० ॥

इति बलादेनां निवर्तयति ।

शकुन्तला । पोरव । रक्ख विणग्रं । मग्रणसंतत्ताबि ण क्खु ग्रत्तणो पक्कवामि ।

राजा । भीरु । ग्रलं गुरुजनभयेन । दिष्ट्या । ते विदितधर्मा तत्रभवानत्र न दोषं ग्रहीष्यति कुलपतिः । ग्रपि च

गान्धर्वेण विवाहेन बह्व्यो राजर्षिकन्यकाः ।
श्रूयन्ते परिणीतास्ताः पितृभिश्चाभिनन्दिताः ॥ ७१ ॥

शकुन्तला । मुञ्च दाव मं । भूग्रोबि सहीजणं ग्रणुमाणइस्सं ।

राजा । भवतु । मोक्ष्यामि ।

शकुन्तला । कदा ।

राजा ।

ग्रपरिक्षतकोमलस्य ताव
त्कुसुमस्येव नवस्य षट्पदेन ।
ग्रधरस्य पिपासता मया ते
सदयं सुन्दरि गृह्यते रसो ऽस्य ॥ ७२ ॥

इति मुखमस्याः समुन्नमयितुमिच्छति । शकुन्तला परिहरति नाट्येन ।

नेपथ्ये । चक्कवाकवहूए ग्रामन्तेहि । सहग्ररं उबट्ठिदा रग्रणी ।

शकुन्तला । ससंभ्रमं । पोरव । ग्रसंसग्रं मम सरीरवुत्तन्तोबलम्भाग्र ग्रज्जा गोदमी इदो एव्व ग्राग्रच्छदि । दाव विडबन्तरिदो होहि ।

राजा । तथा । इत्यात्मानमावृत्य तिष्ठति ।

॥ ततः प्रविशति पात्रहस्ता गौतमी सख्यौ च ॥

सख्यौ । इदो इदो ग्रज्जा गोदमी ।

गौतमी । शकुन्तलामुपेत्य । जादे । अवि लङ्कसंदावाइं दे अङ्गाइं ।

शकुन्तला । अत्थि मे विसेसो ।

गौतमी । इमिणा दब्भोदएण णिराबाधं एव्व दे सरीरं भविस्सदि । शिरसि शकुन्तलामभ्युक्ष्य । वच्छे । परिणदो दिअहो । एहि । उडजं एव्व गच्छम्ह । इति प्रस्थिताः ।

शकुन्तला । आत्मगतं । हिअअ । पढमं एव्व सुहोवणदे मणोरहे कादरभावं ण मुञ्चसि । साणुसअविहडिअस्स कहं दे संपदं संदावो । पदान्तरे स्थित्वा । प्रकाशं । लदावलअ संदावहारअ । आमन्तए तुमं भूओवि परिभोआअ ।

॥ दुःखेन निष्क्रान्ता शकुन्तला सहेतराभिः ॥

राजा । पूर्वस्थानमुपेत्य । सनिःश्वासं । अहो विघ्नवत्यः प्रार्थितार्थसिद्धयः । मया हि

मुहुरङ्गुलिसंवृताधरोष्ठं
प्रतिषेधाक्षरविक्लवाभिरामं ।
मुखमंशविवर्तिपक्ष्मलाक्ष्याः
कथमप्युन्नमितं न चुम्बितं तत् ॥ ७३ ॥

क्व नु खलु संप्रति गच्छामि । अथवा । इहैव प्रियापरिभुक्तमुक्ते लतावलये मुहूर्तं स्थास्यामि । सर्वतो ऽवलोक्य ।

तस्याः पुष्पमयी शरीरलुलिता शय्या शिलायामियं
क्लान्तो मन्मथलेख एष नलिनीपत्रे नखैरर्पितः ।
हस्ताद्भ्रष्टमिदं बिसाभरणमित्यासज्यमानेक्षणो
निर्गन्तुं सहसा न वेतसगृहाच्छक्नो ऽस्मि शून्यादपि ॥ ७४ ॥

आकाशे । राजन् ।

सायन्तने सवनकर्मणि संप्रवृत्ते
वेदिं हुताशनवतीं परितः प्रयस्ताः ।
छायाश्चरन्ति बहुधा भयमादधानाः
संध्यापयोदकपिशाः पिशिताशनानां ॥ ७५ ॥

राजा । अयमयमागच्छामि । इति निष्क्रान्तः ।

॥ तृतीयो ऽङ्कः ॥

॥ ततः प्रविशतः कुसुमावचयमभिनयन्त्यौ सख्यौ ॥

अनसूया । हला पिअंवदे । जइबि गन्धव्वेण विवाहविहिणा णिव्वुत्तकल्लाणा सउन्दला अणुरूबभत्तुगामिणी संवुत्तेत्ति णिव्वुदं मे हिअअं । तहबि एत्तिअं चिन्तणिज्जं ।

प्रियंवदा । कहं विअ ।

अनसूया । अज्ज सो राएसी इट्ठिं परिसमाबिअ इसीहिं विसज्जिओ अत्तणो णअरं पविसिअ अन्तेउरसमागदो इदोगदं वुत्तन्तं सुमरदि वा ण वेत्ति ।

प्रियंवदा । वीसद्धा होहि । ण तादिसा आकिदिविसेसा गुणविरोहिणो होन्ति । तादो दाणिं इदं वुत्तन्तं सुणिअ ण आणे किं पडिबज्जिस्सदित्ति ।

अनसूया । जह अहं देक्खामि । तह तस्स अणुमदं भवे ।

प्रियंवदा । कहं विअ ।

अनसूया । गुणवदे कण्णआ पडिबादणिज्जेत्ति अअं दाव पढमो संकप्पो । तं जइ देव्वं एव्व संपादेदि । णं अप्पाआसेण किदत्थो गुरुअणो ।

प्रियंवदा । पुष्पभाजनं विलोक्य । सहि । अवइदाइं बलिकम्मपज्जत्ताइं कुसुमाइं ।

अनसूया । णं पिअसहीए सउन्दलाए सोहग्गदेवआ अच्चणीआ ।

प्रियंवदा । जुज्जदि । इति तदेव कर्मारभेते ।

नेपथ्ये । अयमहं भोः ।

अनसूया । कर्णं दत्वा । सहि । अदिहीणं विअ णिवेदिदं ।

प्रियंवदा । णं उडजसंणिहिदा सउन्दला । आत्मगतं । अज्ज उण हिअएण असंणिहिदा ।

अनसूया । होदु । अलं एत्तिएहिं कुसुमेहिं ।

॥ इति प्रस्थिते ॥

नेपथ्ये । आ अतिथिपरिभाविनि ।

विचिन्तयन्ती यमनन्यमानसा
तपोधनं वेत्सि न मामुपस्थितं ।
स्मरिष्यति त्वां न स बोधितो ऽपि स
न्कथां प्रमत्तः प्रथमं कृतामिव ॥ ७६ ॥

प्रियंवदा । हद्धी हद्धी । अप्पिअं एव्व संवुत्तं । कस्सिंपि पूआरुहे अबरद्धा सुण्णहिअआ सउन्दला । पुनर्विलोक्य । ण हु जस्सिं कस्सिंपि । एसो दुव्वासो सुलहकोबो महेसी । तह सविअ वेअचलोप्फुल्लदुव्वारगईए पडिणिवुत्तो । को अण्णो हुदवहादो दहिदुं पहविस्सदि ।

अनसूया । गच्छ । पादेसु पणमिअ णिवत्तेहि णं । जाव अहं अग्घोदअं उबकप्पेमि ।

प्रियंवदा । तह । इति निष्क्रान्ता ।

अनसूया । पदान्तरे स्खलितं निरूप्य । अम्मो । आवेअक्खलिदाए गईए पब्भट्ठं मे हत्थादो पुप्फभाअणं । इति पुष्पोच्चयं रूपयति ।

प्रविश्य

प्रियंवदा । सखि । पकिदिवक्को सो कस्स अणुणअं पडिगेण्हेदि । किंपि उण साणुक्कोसो किदो ।

अनसूया । सस्मितं । तस्सिं बहु एदंपि । कहेहि ।

प्रियंवदा । जदा णिवत्तिदुं ण इच्छदि । तदा विण्णबिदो मए । भअवं । पढमंत्ति पेक्खिअ अविण्णादतबप्पहावस्स दुहिदुजणस्स भअवदा एक्को अबराहो मरिसिदव्वोत्ति ।

अनसूया । तदो तदो ।

प्रियंवदा । तदो । मे वअणं अण्णहाभविदुं ण अरुहदि । किंदु अहिण्णाणाभरणदंसणेण सावो णिवत्तिस्सदित्ति मन्तअन्तो सअं अन्तरिहिदो ।

अनसूया । सक्कं दाणिं अस्ससिदुं अत्थि । तेण राएसिणा संपत्थिदेण सणामहेअङ्किअं अङ्गुलीअअं सुमरणीअंत्ति सअं पिणद्धं । तस्सिं साहीणोबाआ सउन्दला भविस्सदि ।

प्रियंवदा । सहि । एहि । देवकज्जं दाव णिव्वत्तेम्ह ।

॥ इति परिक्रामतः ॥

प्रियंवदा । अवलोक्य । अणसूए । पेक्ख दाव । वामहत्थोबहिदवअणा आलिहिदा विअ पिअसही भत्तुगदाए चिन्ताए अत्ताणंपि ण एसा विभावेदि । किं उण आअन्तुअं ।

अनसूया । पिअंवदे । दुवेणं एव्व णो मुहे एसो वुत्तन्तो

चिट्ठदु । रक्खिदव्वा खु पकिदिपेलवा पिअसही ।

प्रियंवदा । को दाणिं उण्होदएण णोमालिअं सिञ्चेदि ।

॥ इत्युभे निष्क्रान्ते ॥

॥ विष्कम्भकः ॥

---

॥ ततः प्रविशति सुप्तोत्थितः शिष्यः ॥

शिष्यः । वेलोपलक्षणार्थमादिष्टो ऽस्मि तत्रभवता प्रवासादुपावृत्तेन काश्यपेन । प्रकाशं निर्गतस्तावदवलोकयामि । कियदवशिष्टं रजन्या इति । परिक्रम्यावलोक्य च । हन्त प्रभातं । तथा हि

यात्येकतो ऽस्तशिखरं पतिरोषधीना
मापिष्कृतारुणपुरःसर एकतो ऽर्कः ।
तेजो द्वयस्य युगपद्व्यसनोदयाभ्यां
लोको नियम्यत इवात्मदशान्तरेषु ॥ ७७ ॥

अपि च ।

अन्तर्हिते शशिनि सैव कुमुद्वती मे
दृष्टिं न नन्दयति संस्मरणीयशोभा ।
इष्टप्रवासजनितान्यबलाजनस्य
दुःखानि नूनमतिमात्रसुदुःसहानि ॥ ७८ ॥

प्रविश्यापटीक्षेपेण

अनसूया । जइबि णाम विसअपरम्मुहस्सबि जणस्स एदं ण विदिअं । तहबि तेण एणा सउन्दलाए अणज्जं आअरिदं ।

शिष्यः । यावदुपस्थितां होमवेलां गुरवे निवेदयामि । इति निष्क्रान्तः ।

अनसूया । पडिबुद्धाबि किं करिस्सं । ण मे उइदेसुबि णिअकरणिज्जेसु हत्थपाआ पसरन्ति । कामो दाणिं सकामो होदु । जेण असच्चसंधे जणे सुद्धहिअआ सही पदं कारिदा । अहवा । दुव्वाससाबो एसो विआरेदि । अण्णहा कहं सो राएसी तारिसाणि मन्तिअ एत्तिअस्स कालस्स लेहमत्तंपि ण विसज्जेदि । ता इदो अहिणाणं अङ्गुलीअअं से विसज्जेम । दुक्खसीले तबस्सिजणे को अब्भत्थीअदु । णं सहीगामी दोसोत्ति ववसिदाबि ण पारेमि पवासपडिणिउत्तस्स तादकस्सबस्स दुस्सन्तपरिणीदं आवण्णसत्तं सउन्दलं णिवेदिदुं । इत्थंगए अम्हेहिं किं करणिज्जं ।

प्रविश्य

प्रियंवदा । सहर्षं । सहि । तुवर तुवर सउन्दलाए पत्थाणकोदुअं णिव्वत्तिदुं ।

अनसूया । सहि । कहं एदं ।

प्रियंवदा । सुणाहि दाणिं । सुहसइदपुच्छिआ सउन्दलासआसं गदम्हि ।

अनसूया । तदो तदो ।

प्रियंवदा । दाव एणं लज्जावणदमुहिं परिस्सजिअ सअं तादकस्सबेण एव्वं अहिणन्दिदं । दिट्ठिआ । धूमाउलिददिट्ठिणोबि जअमाणस्स पाअए एव्व आहुदी पडिदा । वच्छे । सुसिस्सपरिदिण्णा

विश्र विज्जा असोत्रणिज्जा संवुत्ता । अज्ज एव्व इसिपडिरक्खि दं तुमं भत्तुणो सत्रासं विसज्जेमित्ति ।

अनसूया । अह्न केण सूइदो तादकस्सवस्स वुत्तन्तो ।

प्रियंवदा । अग्गिसरणं पविट्ठस्स सरीरं विणा छन्दोमईए वा आए ।

अनसूया । सविस्मयं । कहेहि ।

प्रियंवदा । संस्कृतमाश्रित्य ।

दुष्यन्तेनाहितं तेजो दधानां भूतये भुवः ।
अवेहि तनयां ब्रह्मन्नग्निगर्भां शमीमिव ॥ ७९ ॥

अनसूया । प्रियंवदामाश्लिष्य । सहि । पिग्नं मे । पिग्नं मे । किंदु अज्ज एव्व सउन्दला णीअदित्ति उक्कण्ठासाहारणं परितोसं अणु होमि ।

प्रियंवदा । सहि । वग्नं दाव उक्कण्ठं विणोदइस्सामो । सा तबस्सिणी णिव्वुदा होदु ।

अनसूया । तेण हि एदस्सिं चूदसाहावलम्बिदे णारिएरसमुग्गए एतण्णिमित्तं एव्व कालन्तरक्खमा णिक्खित्ता मए केसरमालिआ । ता इमं हत्थसंणिहिदं करेहि । जाव अहंपि से मिअलोअणाए तित्थ मित्तिअं दुव्वाकिसलआणित्ति मङ्गलसमालम्भणाणि विरएमि ।

प्रियंवदा । तह करीअदु ।

अनसूया निष्क्रान्ता । प्रियंवदा नाट्येन सुमनसो गृह्णाति ।

नेपथ्ये । गौतमि । आदिश्यन्तां शार्ङ्गरवमिश्राः शकुन्तलानयनाय ।

प्रियंवदा । कर्णं दत्वा । अणसूए । तुवर तुवर । एदे खु हत्थि णाउरगामिणो इसीओ सद्दावीअन्ति ।

प्रविश्य समालम्भनहस्ता

अनसूया । सहि । एहि । गच्छम्ह ।

॥ इति परिक्रामतः ॥

प्रियंवदा । विलोक्य । एसा सुज्जोदए एव्व सिहामज्जिदा पडिच्छिदणीवारहत्थाहिं सोत्थिवाअणकाहिं ताबसीहिं अहिणन्दीअमाणा सउन्दला चिट्ठइ । उबसप्पम्ह णं । इत्युपसर्पतः ।

॥ ततः प्रविशति यथोद्दिष्टव्यापारासनस्था शकुन्तला ॥

शकुन्तलां प्रति

तापसीनामन्यतमा । जादे । भत्तुणो बहुमाणसूअअं महादेईसद्दं लहेहि ।

द्वितीया । वच्छे । वीरप्पसविणी होहि ।

तृतीया । वच्छे । भत्तुणो बहुमदा होहि ।

॥ इत्याशिषो दत्वा गौतमीवर्ज्जं निष्क्रान्ताः ॥

सख्यौ । उपसृत्य । सहि । सुहमज्जणं दे होदु ।

शकुन्तला । साअदं मे सहीणं । इदो णिसीदह ।

उभे । मङ्गलपत्राण्यादाय । उपविश्य । हला । सज्जा होहि । जाव मङ्गलसमालम्भणं विरएम ।

शकुन्तला । एदंपि बहुमन्तव्वं । दुल्लहं दाणिं मे सहीमण्डणं भविस्सदि । इति बाष्पं विहरति ।

उभे । सहि । उइदं ण दे मङ्गलकाले रोइदुं । इत्यश्रूणि प्रमृज्य नाट्येन प्रसाधयतः ।

प्रियंवदा । आहरणोइदं रूबं अस्समसुलहेहिं पसाहणेहिं विप्पआरीअदि ।

॥ प्रविश्योपायनहस्तावृषिकुमारकौ ॥

उभौ । इदमलंकरणमलंक्रियतामत्रभवती ।

॥ सर्वा विलोक्य विस्मिताः ॥

गौतमी । वच्छ णारअ । कुदो एदं ।

प्रथमः । तातकाश्यपप्रभावात् ।

गौतमी । किं माणसी सिद्धी ।

द्वितीयः । न खलु । न खलु । श्रूयतां । तत्रभवता वयमाज्ञप्ताः । शकुन्तलाहेतोर्वनस्पतिभ्यः कुसुमान्याहरतेति । तत इदानीं

क्षौमं केनचिदिन्दुपाण्डु तरुणा माङ्गल्यमाविष्कृतं
निःष्ठ्यूतश्चरणोपभोगसुलभो लाक्षारसः केनचित् ।
अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितै
र्दत्तान्याभरणानि तत्किसलयोद्भेदप्रतिद्वन्द्विभिः ॥ ८० ॥

प्रियंवदा । शकुन्तलां विलोक्य । हला । इमाए अब्भुववत्तीए सूइदा दे भत्तुणो गेहे अणुहोदव्वा राअलच्छित्ति ।

॥ शकुन्तला व्रीडां निरूपयति ॥

प्रथम । गौतम । एह्येहि । अभिषेकोत्तीर्णाय काश्यपाय वनस्पतिसेवां निवेदयावः ।

द्वितीयः । तथा ।

॥ इति निष्क्रान्तौ ॥

सख्यौ । अए । अणुबजुत्तभूसणो अअं जणो । चित्तकम्मपरिअएण अङ्गेसु दे आहरणविणिओअं करेम्ह ।

शकुन्तला । जाणे वो णेउणं ।　॥ उभे नाट्येनालंकुरुतः ॥

॥ ततः प्रविशति स्नानोत्तीर्णः काश्यपः ॥

काश्यपः ।

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
कण्ठः स्तम्भितवाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनं ।
वैक्लव्यं मम तावदीदृशमपि स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः ॥ ८१ ॥

इति परिक्रामति ।

सख्यौ । हला सउन्दले । अवसिदमण्डणासि । परिधेहि संपदं खोमजुअलं ।

॥ शकुन्तलोत्थाय परिधत्ते ॥

गौतमी । जादे । एसो दे आणन्दपरिवाहिणा चक्खुणा परिस्सजन्तो विअ गुरू उवट्ठिदो । आआरं दाव पडिवज्ज ।

शकुन्तला । सव्रीडं । ताद । वन्दामि ।

काश्यपः । वत्से ।

ययातेरिव शर्मिष्ठा भर्तुर्बहुमता भव ।
सुतं त्वमपि सम्राजं सेव पुरुमवाप्नुहि ॥ ८२ ॥

गौमीत । भअवं । वरोक्खु एसो । ण आसिसा ।

काश्यपः । वत्से । इतः सद्यो हुताग्नीन्प्रदक्षिणीकुरुष्व ।

॥ सर्वे परिक्रामन्ति ॥

काश्यपः । ऋक्छन्दसाशास्ते ।

अमी वेदिं परितः क्लृप्तधिष्ण्याः
समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः ।
अपघ्नन्तो दुरितं हव्यगन्धै
र्वैतानास्त्वां वह्नयः पावयन्तु ॥ ८३ ॥

प्रतिष्ठस्वेदानीं । सदृष्टिक्षेपं । क्व ते शार्ङ्गरवमिश्राः ।

प्रविश्य

शिष्यः । भगवन् । इमे स्मः ।

काश्यपः । भगिन्यास्ते मार्गमादेशय ।

शार्ङ्गरवः । इत इतो भवती । ॥ सर्वे परिक्रामन्ति ॥

काश्यपः । भो भोः संनिहितास्तपोवनतरवः ।

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवं ।
आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायतां ॥ ८४ ॥

कोकिलरवं सूचयित्वा ।

अनुमतगमना शकुन्तला
तरुभिरियं वनवासबन्धुभिः ।
परभृतविरुतं कलं यथा
प्रतिवचनीकृतमेभिरदिशं ॥ ८५ ॥

आकाशे ।

रम्यान्तरः कमलिनीहरितैः सरोभि
श्छायाद्रुमैर्नियमितार्कमयूखतापः ।
भूयात्कुशेशयरजोमृदुरेणुरस्याः
शान्तानुकूलपवनश्च शिवश्च पन्थाः ॥ ८६ ॥

॥ सर्वे सविस्मयमाकर्णयन्ति ॥

गौतमी । जादे । णादिजणसिणिद्धाहिं अणुण्णादगमणासि तबोवणदेवदाहिं । पणम भअवदीणं ।

शकुन्तला । सप्रणामं परिक्रम्य । जनान्तिकं । हला पिश्रंवदे । णं श्रज्जउत्तदंसणुस्सुश्राएबि श्रस्समं परिच्चश्रन्तीए दुक्खदुक्खेण मे चलणा पुरदो पवट्टन्ति ।

प्रियंवदा । ण केवलं तबोवणविरहकादरा सही एव्व । तुए उबट्ठिदविश्रोश्रस्स तबोवणस्सबि दाव समवत्था दीसइ ।

उग्गलिश्रदब्भकवला मिईश्रो परिच्चत्तणाच्चणा मोरा ।
श्रोसरिश्रपण्डुपत्ता मुश्रन्ति श्रस्सूणि विश्र लदाश्रो ॥ ८७ ॥

शकुन्तला । स्मृत्वा । ताद । लदाबहिणिश्रं वणजोसिणिं दाव श्रामन्तइस्सं ।

काश्यपः । श्रवैमि ते तस्यां सोदर्यस्नेहं । इयं तावद्दक्षिणेन ।

शकुन्तला । लतामुपेत्य । वणजोसिणि । चूदसंगदाबि मं पच्चालिङ्गइ दोगदेहिं साहाबाहाहिं । श्रज्जप्पहुदि दूरपरिवत्तिणी दे खु भविस्सं ।

काश्यपः ।

संकल्पितं प्रथममेव मया तवार्थे
भर्तारमात्मसदृशं सुकृतैर्गता त्वं ।
चूतेन संश्रितवती नवमालिकेय
मस्यामहं त्वयि च संप्रति वीतचिन्तः ॥ ८८ ॥

इतः पन्थानं प्रतिपद्यस्व ।

शकुन्तला । सख्यौ प्रति । हला । एसा दुवेणं वो हत्थे णिक्खेबो ।

सख्यौ । श्रश्रं जणो कस्स हत्थे समप्पिदो । इति बाष्पं विहरतः ।

काश्यपः । श्रनसूये । श्रलं रुदित्वा । ननु भवतीभ्यामेव स्थिरीकर्तव्या शकुन्तला ।

॥ सर्वे परिक्रामन्ति ॥

शकुन्तला । ताद । एसा उडजपज्जन्तचारिणी गब्भमन्थरा मिअबहू जदा अणघप्पसवा होइ । तदा मे कंपि पिअणिवेदइत्तअं विसज्जइस्सह ।

काश्यपः । नेदं विस्मरिष्यामः ।

शकुन्तला । गतिभङ्गं रूपयित्वा । को णुक्खु एसो णिवसणे मे सज्जइ । इति परावर्तते ।

काश्यपः । वत्से ।

यस्य त्वया व्रणविरोपणमिङ्गुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।
श्यामाकमुष्टिपरिवर्धितको जहाति
सो ऽयं न पुत्रकृतकः पदवीं मृगस्ते ॥ ८९ ॥

शकुन्तला । वच्छ । किं सहवासपरिच्चाइणिं मं अणुसरसि । अचिरप्पसूदाए जणणीए विणा विवड्ढिदो एव्व । दाणिंपि मए विरहिदं तुमं तादो चिन्तइस्सदि । णिवत्तेहि दाव । इति रुदन्ती प्रस्थिता ।

काश्यपः ।

उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं
वाष्पं कुरु स्थिरतया विरतानुबन्धं ।
अस्मिन्नलक्षितनतोन्नतभूमिभागे
मार्गे पदानि खलु ते विषमीभवन्ति ॥ ९० ॥

शार्ङ्गरवः । भगवन् । ओदकान्तात्स्निग्धो जनो ऽनुगन्तव्य इति श्रूयते । तदिदं सरस्तीरमत्र संदिश्य प्रतिगन्तुमर्हसि ।

काश्यपः । तेन हीमां क्षीरवृक्षच्छायामाश्रयामः ।

॥ सर्वे परिक्रम्य स्थिताः ॥

काश्यपः । आत्मगतं । किं नु खलु तत्रभवतो दुष्यन्तस्य युक्तरूपमस्माभिः संदेष्टव्यं । इति चिन्तयति ।

शकुन्तला । जनान्तिकं । हला । पेक्ख णलिणीपत्तन्तरिदं पिअसहअरं अदेक्खन्ती आदुरा चक्कवाई आरडदि । दुक्करं अहं करेमित्ति ।

अनसूया । सहि । मा एव्वं मन्तिअ ।

एसाबि पिएण विणा गमेइ रअणिं विसाअदीहअरं ।
गरुअंपि विरहदुक्खं आसाबन्धो सहाबेदि ॥ ११ ॥

काश्यपः । शार्ङ्गरव । त्वया मद्वचनात्स राजा शकुन्तलां पुरस्कृत्य वक्तव्यः ।

शार्ङ्गरवः । आज्ञापयतु भवान् ।

काश्यपः ।

अस्मान्साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मन
स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च तां ।
सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्यायत्तमतः परं न खलु तद्वाच्यं वधूबन्धुभिः ॥ १२ ॥

शार्ङ्गरवः । गृहीतः संदेशः ।

काश्यपः । वत्से । त्वमिदानीमनुशासनीयासि । वनौकसो ऽपि सन्तो लौकिकज्ञा वयं ।

शार्ङ्गरवः । न खलु धीमतां कश्चिदविषयो नाम ।

काश्यपः । सा त्वमितः पतिकुलं प्राप्य

शुश्रूषस्व गुरून्कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः ।

भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥ १३ ॥

कथं वा गौतमी मन्यते ।

गौतमी । एत्तिओ बहूजणस्स उवदेसो । जादे । एदं क्खु सव्वं ओधारेहि ।

काश्यपः । वत्से । परिष्वजस्व मां सखीजनं च ।

शकुन्तला । ताद । इदो एव्व पिअंवदामिस्साओ सहीओ णिवत्तिस्सन्ति ।

काश्यपः । वत्से । इमे अपि प्रदेये । न युक्तमनयोस्तत्र गन्तुं । त्वया सह गौतमी यास्यति ।

शकुन्तला । पितरमाश्लिष्य । कहं दाणिं तादस्स अङ्कादो परिब्भट्ठा मलअतरुम्मुलिआ चन्दणलदा विअ देसन्तरे जीविअं धारइस्सं ।

काश्यपः । वत्से । किमेवं कातरासि ।

अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे
विभवगुरुभिः कृत्यैस्तस्य प्रतिक्षणमाकुला ।
तनयमचिरात्प्राचीवार्कं प्रसूय च पावनं
मम विरहजां न त्वं वत्से शुचं गणयिष्यसि ॥ १४ ॥

॥ शकुन्तला पितुः पादयोः पतति ॥

काश्यपः । यदिच्छामि ते । तदस्तु ।

शकुन्तला । सख्यावुपेत्य । हला । दुवेवि मं समं एव्व परिस्सजह ।

सख्यौ । तथा कृत्वा । सहि । जइ णाम सो राआ पच्चहिजाणमन्थरो भवे । तदो से इमं अत्तणामहेअङ्किअं अङ्गुलीअअं दंसेहि ।

शकुन्तला । इमिणा संदेहेण वो आकम्पिदम्हि ।

सख्यौ । मा भाअ्रादि । सिणिद्धो पाबसङ्गी ।

शार्ङ्गरवः । युगान्तरमारूढः सविता । त्वरतां भवती ।

शकुन्तला । आश्रमाभिमुखी स्थित्वा । ताद । कदा णु भूओ तबोवणं पेक्खिस्सं ।

काश्यपः । श्रूयतां ।

भूत्वा चिराय चतुरन्तमहीसपत्नी
दौष्यन्तिमप्रतिरथं तनयं निवेश्य ।
भर्त्रा तदर्पितकुटुम्बभरेण सार्धं
शान्ते करिष्यसि पदं पुनराश्रमे ऽस्मिन् ॥ १५ ॥

गौतमी । जादे । परिहीअदि गमणवेला । णिवत्तेहि पिदरं । अहवा । चिरेणाबि पुणो पुणो एसा एव्वं मन्तइस्सदि । णिवत्तदु भवं ।

काश्यपः । वत्से । उपरुध्यते तपोनुष्ठानं ।

शकुन्तला । भूयः पितरमाश्लिष्य । तबच्चरणपीडिदं तादसरीरं । ता मा अदिमेत्तं मम किदे उक्कण्ठिदुं ।

काश्यपः । सनिःश्वासं ।

शममेष्यति मम शोकः कथं नु वत्से त्वया चरितपूर्वं ।
उटजद्वारविरूढं नीवारबलिं विलोकयतः ॥ १६ ॥

गच्छ । शिवास्ते पन्थानः सन्तु ।

॥ निष्क्रान्ता शकुन्तला सहयायिनश्च ॥

सख्यौ । शकुन्तलां विलोक्य । हद्धी हद्धी । अन्तलिहिदा सउन्दला वणराईए ।

काश्यपः । सनिःश्वासं । अनसूये । गतवती वां सहधर्मचारिणी ।

निगृह्य शोकमनुगच्छतं मां प्रस्थितं ।

उभे । ताद । सउन्दलाविरहिदं सुण्णं विअ तवोवणं कहं पवि सामो ।

काश्यपः । स्नेहप्रवृत्तिरेवंदर्शिनी । सविमर्शं परिक्रम्य । हन्त भोः । शकुन्तलां पतिकुलं विसृज्य लब्धमिदानीं स्वास्थ्यं । कुतः ।

अर्थो हि कन्या परकीय एव
तामद्य संप्रेष्य परिग्रहीतुः ।
जातो ममायं विशदः प्रकामं
प्रत्यर्पितन्यास इवान्तरात्मा ॥ १७ ॥

॥ इति निष्क्रान्ताः सर्वे ।

॥ चतुर्थो ऽङ्कः ॥

॥ ततः प्रविशत्यासनस्थो राजा विदूषकश्च ॥

विदूषकः । कर्णं दत्त्वा । भो भो वअस्स । संगीदसालन्तरे अवधाणं देहि । कलविसुद्धाए गीदीए सरसंजोओ सुणीअदि । जाणे । तत्तहोदी हंसवदिआ वण्णपरिअअं करेदित्ति ।

राजा । तूष्णीं भव । यावदाकर्णयामि ।

॥ आकाशे गीयते ॥

अहिणवमहुलोलुवो तुमं
तह परिचुम्बिअ चूअमञ्जरिं ।
कमलवसइमेत्तणिव्वुदो
महुअर विम्हरिदोसि णं कहं ॥ १८ ॥

राजा । अहो रागपरिवाहिनी गीतिः ।

विदूषकः । किं दाव गीदीए अवगदो अक्खरत्थो ।

राजा । स्मितं कृत्वा । सकृत्कृतप्रणयो ऽयं जनः । तदस्या देवीं वसुमतीमन्तरेण महदुपालम्भनं गतो ऽस्मि । सखे माठव्य । मद्वचनादुच्यतां हंसपदिका । निपुणमुपालब्धो ऽस्मीति ।

विदूषकः । जं भवं आणबेदि । उत्थाय । भो वअस्स । गहीदस्स ताए परकीएहिं हत्थेहिं सिहण्डए ताडीअमाणस्स अच्छराए

वीदरात्रस्स विग्र णत्थि दाणिं मे मोक्खो ।

राजा । गच्छ । नागरिकवृत्त्या संज्ञापयैनां ।

विदूषकः । का गई । इति निष्क्रान्तः ।

राजा । आत्मगतं । किं नु खलु गीतार्थमाकर्ण्येष्टजनविरहादृते ऽपि बलवदुत्कण्ठितो ऽस्मि । अथवा ।

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दा
न्पर्युत्सुकीभवति यत्सुखितो ऽपि जन्तुः ।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि ॥ ९९ ॥

इति पर्याकुलस्तिष्ठति ।

॥ ततः प्रविशति कञ्चुकी ॥

कञ्चुकी । अहो नु खल्वीदृशीमवस्थां प्रपन्नो ऽस्मि ।

आचार इत्यवहितेन मया गृहीता
या वेत्रयष्टिरवरोधगृहेषु राज्ञः ।
काले गते बहुतिथे मम सैव जाता
प्रस्थानविक्लवगतेरवलम्बनार्थं ॥ १०० ॥

भोः । कामं धर्मकार्यमनतिपात्यं देवस्य । तथापीदानीमेव धर्मासनादुत्थितस्य पुनरुपरोधकारि कण्वशिष्यागमनमस्मै नोत्सहे निवेदितुं । अथवा । अविश्रामो ऽयं लोकतन्त्राधिकारः । कुतः ।

भानुः सकृद्युक्ततुरङ्ग एव
रात्रिंदिवं गन्धवहः प्रयाति ।
शेषः सदैवाहितभूमिभारः
षष्ठांशवृत्तेरपि धर्म एषः ॥ १०१ ॥

यावन्नियोगमनुतिष्ठामि । परिक्रम्यावलोक्य च । एष देवः ।

प्रजाः प्रजाः स्वा इव सान्त्वयित्वा
निषेवते शान्तमना विविक्तं ।
यूथानि संचार्य रविप्रतप्तः
शीतं दिवा स्थानमिव द्विपेन्द्रः ॥ १०२ ॥

उपगम्य । जयतु जयतु देवः । एते खलु हिमवतो गिरेरुपत्यकारण्यवासिनः काश्यपसंदेशमादाय सस्त्रीकास्तपस्विनः संप्राप्ताः । श्रुत्वा देवः प्रमाणं ।

राजा । सादरं । किं काश्यपसंदेशहारिणः ।

कञ्चुकी । अथ किं ।

राजा । तेन हि मद्वचनाद्विज्ञाप्यतामुपाध्यायः सोमरातः । अमूनाश्रमवासिनः श्रौतेन विधिना सत्कृत्य स्वयमेव प्रवेशयितुमर्हतीति । अहमप्यत्र तपस्विदर्शनोचिते प्रदेशे स्थितः प्रतिपालयामि ।

कञ्चुकी । यदाज्ञापयति देवः । इति निष्क्रान्तः ।

राजा । उत्थाय । वेत्रवति । अग्निशरणमार्गमादेशय ।

प्रतीहारी । इदो इदो देवो ।

राजा । परिक्रामति । अधिकारखेदं निरूप्य । सर्वः प्रार्थितमर्थमधिगम्य सुखी संपद्यते जन्तुः । राज्ञां तु चरितार्थता दुःखोत्तरैव ।

औत्सुक्यमात्रमवसादयति प्रतिष्ठा
क्लिश्नाति लब्धपरिपालनवृत्तिरेनं ।
नातिश्रमापनयनाय न च श्रमाय
राज्यं स्वहस्तधृतदण्डमिवातपत्रं ॥ १०३ ॥

नेपथ्ये

वैतालिकौ । विजयतां देवः ।

प्रथमः ।

स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथवा ते वृत्तिरेवंविधैव ।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानां ॥ १०४ ॥

द्वितीयः ।

नियमयसि विमार्गप्रस्थितानात्तदण्डः
प्रशमयसि विवादं कल्पसे रक्षणाय ।
अतनुषु विभवेषु ज्ञातयः सन्तु नाम
त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानां ॥ १०५ ॥

राजा । एते क्लान्तमनसः पुनर्नवीकृताः स्मः । इति परिक्रामति ।

प्रतीहारी । अहिणवसंमज्जणसस्सिरीओ संणिहिदहोमधेणू अग्गिसरणालिन्दो । आरुहदु देवो ।

राजा । अरुह्य परिजनांसावलम्बी तिष्ठति । वेत्रवति । किमुद्दिश्य भगवता काश्यपेन मत्सकाशमृषयः प्रेरिताः स्युः ।

किं तावद्व्रतिनामुपोढतपसां विघ्नैस्तपो दूषितं
धर्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितं ।
आहोस्वित्प्रसवो ममापचरितैर्विष्टम्भितो वीरुधा
मित्यारूढबहुप्रतर्कमपरिच्छेदाकुलं मे मनः ॥ १०६ ॥

प्रतीहारी । सुअरिदणन्दिणो इसीओ देवं सभाजइदुं आअदेत्ति तक्केमि ।

॥ ततः प्रविशन्ति गौतमीसहिताः शकुन्तलां पुरस्कृत्य मुनयः । पुरश्चैषां कञ्चुकी पुरोहितश्च ॥

कञ्चुकी । इत इतो भवन्तः ।

शार्ङ्गरवः । शारद्वत ।

महाभागः कामं नरपतिरभिन्नस्थितिरसौ
न कश्चिद्वर्णानामपथमपकृष्टो ऽपि भजते ।
तथापीदं शश्वत्परिचितविभक्तेन मनसा
जनाकीर्णं मन्ये हुतवहपरीतं गृहमिव ॥ १०७ ॥

शारद्वतः । जाने । भवान्पुरप्रवेशादित्थंभूतः संवृत्तः । अहमपि

अभ्यक्तमिव स्नातः शुचिरशुचिमिव प्रबुद्ध इव सुप्तं ।
बद्धमिव स्वैरगतिर्जनमिह सुखसङ्गिनमवैमि ॥ १०८ ॥

शकुन्तला । निमित्तं सूचयित्वा । अम्महे । किं मे वामेदरं णअणं विप्फुरदि ।

गौतमी । जादे । पडिहदं अमङ्गलं । सुहाइं दे भत्तुकुलदेवदाओ वितरन्दु । इति परिक्रामति ।

पुरोहितः । राजानं निर्दिश्य । भो भोस्तपस्विनः । असावत्रभवान्वर्णाश्रमाणां रक्षिता प्रागेव मुक्तासनो वः प्रतिपालयति । पश्यतैनं ।

शार्ङ्गरवः । भो महाब्राह्मण । काममेतदभिनन्दनीयं । तथापि वयमत्र मध्यस्थाः । कुतः ।

भवन्ति नम्रास्तरवः फलागमै
र्नवाम्बुभिर्भूरिविलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः
स्वभाव एवैष परोपकारिणां ॥ १०९ ॥

प्रतीहारी। देव। पसण्णमुहवण्णा दीसन्ति। जाणामि। विस्सद्धकज्जा इसीओ।

राजा। शकुन्तलां दृष्ट्वा। अथात्रभवती।

का स्विदवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या।
मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणां ॥ ११० ॥

प्रतीहारी। देव। कुदूहलगब्भो पहिदो ण मे तक्को पसरदि। णं दंसणीआ उण से आकिदी लक्खीअदि।

राजा। भवतु। अनिर्वर्णनीयं परकलत्रं।

शकुन्तला। हस्तमुरसि कृत्वा। आत्मगतं। हिअअ। किं एव्वं वेबसि। अज्जउत्तस्स भावं ओधारिअ धीरं दाव होहि।

पुरोहितः। पुरो गत्वा। एते विधिवदर्चितास्तपस्विनः। कश्चिदेषामुपाध्यायसंदेशः। तं देवः श्रोतुमर्हति।

राजा। अवहितो ऽस्मि।

ऋषयः। हस्तमुद्यम्य। विजयस्व राजन्।

राजा। सर्वानभिवादये।

ऋषयः। इष्टेन युज्यस्व।

राजा। अपि निर्विघ्नतपसो मुनयः।

ऋषयः।

कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि।
तमस्तपति घर्मांशौ कथमाविर्भविष्यति ॥ १११ ॥

राजा। अर्थवान्खलु मे राजशब्दः। अथ भगवाँल्लोकानुग्रहाय कुशली काश्यपः।

ऋषयः। स्वाधीनकुशलाः सिद्धिमन्तः। स भवन्तमनामयप्रश्नपूर्व

कमिदमाह ।

राजा । किमाज्ञापयति भगवान् ।

शार्ङ्गरवः । यन्मिथःसमयादिमां मदीयां दुहितरं भवानुपायंस्त । तन्मया प्रीतिमता युवयोरनुज्ञातं । कुतः ।

त्वमर्हतां प्राग्रसरः स्मृतो ऽसि य
च्छकुन्तला मूर्तिमती च सत्क्रिया ।
समानयंस्तुल्यगुणं बधूवरं
चिरस्य वाच्यं न गतः प्रजापतिः ॥ ११२ ॥

तदिदानीमापन्नसत्त्वा प्रतिगृह्यतां सहधर्मचरणायेति ।

गौतमी । अज्ज । किंपि वत्तुकामम्हि । ण मे वअणावसरो अत्थि । कहंत्ति ।

णावेक्खिदो गुरुअणो इमाए णक्खु पुच्छिदो बन्धुअणो ।
एक्कक्कं एव्व चरिए भणामि किं एक्कं एक्कस्स ॥ ११३ ॥

शकुन्तला । आत्मगतं । किं णुक्खु अज्जउत्तो भणादि ।

राजा । किमिदमुपन्यस्तं ।

शकुन्तला । आत्मगतं । पावओक्खु वअणोवण्णासो ।

शार्ङ्गरवः । कथमिदं नाम । भवन्त एव सुतरां लोकवृत्तान्तनिष्णाताः ।

सतीमपि ज्ञातिकुलैकसंश्रयां
जनो ऽन्यथा भर्तृमतीं विशङ्कते ।
अतः समीपे परिणेतुरिष्यते
तदप्रियापि प्रमदा स्वबन्धुभिः ॥ ११४ ॥

राजा । किं चात्रभवती मया परिणीतपूर्वा ।

शकुन्तला । सविषादं । आत्मगतं । हिअअ । संपदं दे आसङ्का ।

शार्ङ्गरवः । किं कृतकार्यद्वेषो धर्मं प्रति विमुखता कृतावज्ञा ।

राजा । कुतो ऽयमसत्कल्पनाप्रश्नः ।

शार्ङ्गरवः । मूर्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तेषु ।

राजा । विशेषेणाधिक्षिप्तो ऽस्मि ।

गौतमी । जादे । मुहुत्तअं मा लज्ज । अवणइस्सं दाव दे ओउण्ठणं । तदो तुमं भट्टा अहिजाणिस्सदि । इति यथोक्तं करोति ।

राजा । शकुन्तलां निर्वर्ण्य । आत्मगतं ।

इदमुपनतमेवं रूपमक्लिष्टकान्ति
प्रथमपरिगृहीतं स्यान्न वेति व्यवस्यन् ।
भ्रमर इव विभाते कुन्दमन्तस्तुषारं
न खलु च परिभोक्तुं नैव शक्नोमि हातुं ॥ ११५ ॥

इति विचारयन्स्थितः ।

प्रतीहारी । अहो धम्मावेक्खिदा भट्टिणो । ईदिसं णाम सुहोवणदं रूवं देक्खिअ को अण्णो विआरेदि ।

शार्ङ्गरवः । भो राजन् । किमिति जोषमास्यते ।

राजा । भोस्तपोधनाः । चिन्तयन्नपि न खलु स्वीकरणमत्रभवत्याः स्मरामि । तत्कथमिमामभिव्यक्तसत्त्वलक्षणां प्रत्यात्मानं क्षेत्रिणमाशङ्कमानः प्रतिपत्स्ये ।

शकुन्तला । अपवार्य । अज्जस्स परिणए एव्व संदेहो । कुदो दाणिं मे दूराहिरोहिणी आसा ।

शार्ङ्गरवः । मा तावत् ।

कृताभिमर्शामनुमन्यमानः
सुतां त्वया नाम मुनिर्विमान्यः ।
मुष्टं प्रतिग्राह्यता स्वमर्थं
पात्रीकृतो दस्युरिवासि येन ॥ ११६ ॥

शारद्वतः । शार्ङ्गरव । विरम त्वमिदानीं । शकुन्तले । वक्तव्यमुक्तमस्माभिः । सो ऽयमत्रभवानेवमाह । दीयतामस्मै प्रत्ययप्रतिवचनं ।

शकुन्तला । अपवार्य । । इमं अवत्थन्तरं गदे तारिसे अणुराए किं वा सुमरिदेण । अत्ता दाणिं सोअणीओत्ति ववसिदं । प्रकाशं । अज्ज उत्त । इत्यर्धोक्ते । संसइदे दाणिं परिणए ण एसो समुदाआरो । पोरव । ण जुत्तं णाम दे तह पुरा अस्समपदे सहावुत्ताणहिअअं इमं जणं समअपुव्वं पतारिअ ईदिसेहिं अक्खरेहिं पच्चाचक्खिदुं ।

राजा । शान्तं पापं ।

व्यपदेशमाविलयितुं किमीहसे जनमिमं च पातयितुं ।
कूलंकषेव सिन्धुः प्रसन्नमम्भस्तटतरुं च ॥ ११७ ॥

शकुन्तला । होदु । जइ परमत्थदो परपरिग्गहसङ्किणा तुए एव्वं पउत्तं । ता अहिण्णाणेण इमिणा तुह आसङ्कं अवणइस्सं ।

राजा । उदारः कल्पः ।

शकुन्तला । मुद्रास्थानं परामृश्य । हद्धी हद्धी । अङ्गुलीअअसुण्णा मे अङ्गुली । इति सविषादं गौतमीमवेक्षते ।

गौतमी । णूणं दे सक्कावदारब्भन्तरे सचीतित्थसलिलं वन्दमाणाए पब्भट्ठं अङ्गुलीअअं ।

राजा । सस्मितं । इदं तत्प्रत्युत्पन्नमति स्त्रैणमिति यदुच्यते ।

शकुन्तला । एत्थ दाव विहिणा दंसिदं पहुत्तणं । अबरं दे कहिस्सं ।

राजा । श्रोतव्यमिदानीं संवृत्तं ।

शकुन्तला । णं एक्कस्सिं दिअहे णोमालिआमण्डबे णलिणीपत्तभाअणगअं उअअं तुह हत्थे संणिहिदं आसि ।

राजा । शृणुमस्तावत् ।

शकुन्तला । तक्खणं सो मे पुत्तकिदओ दीहापङ्गो णाम मिअपोदओ उबट्ठिदो । तुए अअं दाव पढमं पिअउत्ति अणुअम्पिणा उबच्छन्दिदो उअएण । ण उण दे अपरिचआदो हत्थब्भासं उबगदो । पच्छा तस्सिं एव्व मए गहिदे सलिले णेण किदो पणओ । तदा तुमं इत्थं पहसिदोसि । सव्वो सगन्धेसु विस्ससदि । दुवेबि एत्थ आरण्णएत्ति ।

राजा । एवमादिभिरात्मकार्यनिवर्तिनीनामनृतमयवाङ्मधुभिराकृष्यन्ते विषयिणः ।

गौतमी । महाभाअ । ण अरुहसि एव्वं मन्तिदुं । तबोवणसंवड्ढिदो अणभिण्णो अअं जणो कइदवस्स ।

राजा । तापसवृद्धे ।

स्त्रीणामशिक्षितपटुत्वममानुषीषु
संदृश्यते किमुत याः प्रतिबोधवत्यः ।
प्रागन्तरिक्षगमनात्स्वमपत्यजात
मन्यैर्द्विजैः परभृताः खलु पोषयन्ति ॥ ११८ ॥

शकुन्तला । सरोषं । अणज्ज । अत्तणो हिअआणुमाणेण पेक्खसि । को दाणिं अण्णो धम्मकञ्चुअप्पवेसिणो तिणच्छण्णकूबोबमस्स

तव अणुकिदं पडिबदिस्सदि ।

राजा । आत्मगतं । संदिग्धबुद्धिं मां कुर्वन्नकैतव इवास्याः कोपो लक्ष्यते । तथा ह्यनया

मय्येव विस्मरणदारुणचित्तवृत्तौ
वृत्तं रहःप्रणयमप्रतिपद्यमाने
भेदाद्भ्रुवोः कुटिलयोरतिलोहिताक्ष्या
भग्नं शरासनमिवातिरुषा स्मरस्य ॥ ११९ ॥

प्रकाशं । भद्रे । प्रथितं दुष्यन्तस्य चरितं । तथापीदं न लक्षये ।

शकुन्तला । सुट्ठु दाव अत्त सच्छन्दचारिणी किदम्हि । जा अहं इमस्स पुरुवंसप्पच्चएण मुहमहुणो हिअअट्ठिअविसस्स हत्थब्भासं उवगदा । इति पटान्तेन मुखमावृत्य रोदिति ।

शार्ङ्गरवः । इत्थमात्मकृतमप्रतिहतं चापलं दहति ।

अतः परीक्ष्य कर्तव्यं विशेषात्संगतं रहः ।
अज्ञातहृदयेष्वेवं वैरीभवति सौहृदं ॥ १२० ॥

राजा । अयि भोः । किमत्रभवतीप्रत्ययादेवास्मान्संयुतदोषाक्षरेण क्षिणुथ ।

शार्ङ्गरवः । सासूयं । श्रुतं भवद्भिरधरोत्तरं ।

आ जन्मनः शाठ्यमशिक्षितो य
स्तस्याप्रमाणं वचनं जनस्य ।
परातिसंधानमधीयते यै
र्विद्येति ते सन्तु किलाप्तवाचः ॥ १२१ ॥

राजा । भोः सत्यवादिन् । अभ्युपगतं तावदस्माभिरेवं । किं पुनरिमामतिसंधाय लभ्यते ।

शार्ङ्गरवः । विनिपातः ।

राजा । विनिपातः पौरवैः प्रार्थ्यत इति न श्रद्धेयमेतत् ।

शारद्वतः । शार्ङ्गरव । किमुत्तरेण । अनुष्ठितो गुरोः संदेशः । प्रतिनिवर्तामहे वयं । राजानं प्रति ।

तदेषा भवतः कान्ता त्यज वैनां गृहाण वा ।
उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी ॥ १२२ ॥

गौतमि । गच्छाग्रतः ।

॥ इति प्रस्थिताः ॥

शकुन्तला । कहं इमिणा किदवेण विप्पलद्धम्हि । तुम्हेवि मं परिदेविणिं परिच्चग्रह । इत्यनुप्रतिष्ठते ।

गौतमी । स्थित्वा । वच्छ सङ्गरव । अणुगच्छदि इग्रंक्खु णो करुणपरिदेविणी सउन्दला । पच्चादेसपरुसे भत्तुणि किं वा मे पुत्तिग्रा करिस्सदि ।

शार्ङ्गरवः । सरोषं निवृत्य । किं पुरोभागे स्वातन्त्र्यमवलम्बसे ।

॥ शकुन्तला भीता वेपते ॥

शार्ङ्गरवः । शकुन्तले ।

यदि यथा वदति क्षितिपस्तथा
त्वमसि किं पितुरुत्कुलया त्वया ।
अथ तु वेत्सि शुचि व्रतमात्मनः
पतिकुले तव दास्यमपि क्षमं ॥ १२३ ॥

तिष्ठ । साधयामो वयं ।

राजा । भोस्तपस्विन् । किमत्रभवतीं विप्रलभसे । कुतः ।

कुमुदान्येव शशाङ्कः सविता बोधयति पङ्कजान्येव ।
वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः ॥ १२४ ॥

शार्ङ्गरवः । यदा तु पूर्ववृत्तमन्यसङ्गाद्विस्मृतो भवान् । तदा कथमधर्मभीरुः ।

राजा । भवन्तमेवात्र गुरुलाघवं पृच्छामि ।

मूढः स्यामहमेषा वा वदेन्मिथ्येति संशये ।
दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांशुलः ॥ १२५ ॥

पुरोहितः । विचार्य । यदि तावदेवं क्रियतां ।

राजा । अनुशास्तु मां भवान् ।

पुरोहितः । अत्रभवती तावदा प्रसवादस्मद्गृहे तिष्ठतु । कुत इदमुच्यत इति चेत् । त्वं साधुभिरुद्दिष्टः । प्रथममेव चक्रवर्तिनं पुत्रं जनयिष्यसीति । स चेन्मुनिदौहित्रस्तल्लक्षणोपपन्नो भविष्यति । अभिनन्द्य शुद्धान्तमेनां प्रवेशयिष्यसि । विपर्यये तु पितुरस्याः समीपनयनमवस्थितमेव ।

राजा । यथा गुरुभ्यो रोचते ।

पुरोहितः । वत्से । अनुगच्छ मां ।

शकुन्तला । भअवदि वसुहे । देहि मे विवरं । इति रुदन्ती प्रस्थिता । निष्क्रान्ता सह पुरोधसा सह तपस्विभिश्च । राजा शापव्यवहितस्मृतिः शकुन्तलागतमेव चिन्तयति ।

नेपथ्ये । आश्चर्यं ।

राजा । आकर्ण्य । किं नु खलु स्यात् ।

प्रविश्य

पुरोहितः । सविस्मयं । देव । अद्भुतं खलु संवृत्तं ।

राजा । किमेवं ।

पुरोहितः । देव । परावृत्तेषु कण्वशिष्येषु

सा निन्दन्ती स्वानि भाग्यानि बाला
बाहूत्क्षेपं क्रन्दितुं च प्रवृत्ता ।

राजा । किं च ।

पुरोहितः ।

स्त्रीसंस्थानं चाप्सरस्तीर्थमारा
दुत्क्षिप्यैनां ज्योतिरेकं जगाम ॥ १२६ ॥

॥ सर्वे विस्मयं रूपयन्ति ॥

राजा । भगवन् । प्रागपि सो ऽस्माभिरर्थः प्रत्यादिष्ट एव । किं वृथा तर्केणान्विष्यते । विश्राम्यतु भवान् ।

पुरोहितः । विलोक्य । विजयस्व । इति निष्क्रान्तः ।

राजा । वेत्रवति । पर्याकुलो ऽस्मि । शयनभूमिमार्गमादेशय ।

प्रतीहारी । इदो इदो देवो । इति प्रस्थिता ।

राजा ।

कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयां ।
बलवत्तु दूयमानं प्रत्याययतीव मां हृदयं ॥ १२७ ॥

॥ इति निष्क्रान्ताः सर्वे ॥

॥ पञ्चमो ऽङ्कः ॥

॥ ततः प्रविशति नागरिकः श्यालः पश्चाद्बद्धपुरुषमादाय रक्षिणौ च ॥

रक्खिणौ । ताडयित्वा । अले कुम्भिलआ । कहेहि । कहिं तुए एशे मणिबन्धणुक्किण्णणामहेए लाअकीए अङ्गुलीअए शमाशादिए ।

पुरुषः । भीतिनाटितकेन । पशीदन्तु भावमिश्शे । अहके ण ईदिश कम्मकाली ।

प्रथमः । किं खु शोहणे बम्हणेत्ति कलिअ एणा पडिग्गहे दिण्णे ।

पुरुषः । शुणुह दाणिं । अहके शक्कावदालब्भन्तलवाशी धीवले ।

द्वितीयः । पाडच्चला । किं अम्हेहिं जादी पुच्छिदे ।

श्यालः । सूअअ । कहेदु सव्वं अणुक्कमेण । मा णं अन्तरा पडिबन्धह ।

उभौ । जं आबुत्ते आणबेदि । कहेहि ।

पुरुषः । अहके जालुग्गालादीहिं मच्छबन्धणोबाएहिं कुडुम्बभलणं कलेमि ।

श्यालः । विहस्य । विसुद्धो दाणिं आजीवो ।

पुरुषः । भट्टा । मा एव्वं भण ।

शह्जे किल जे विणिन्दिए
णा हु दे कम्म विवज्जणीअए ।
पशुमालणाकम्म दालुणे
अणुकम्पामिदु एव्व शोत्तिए ॥ १२८ ॥

श्यालः । तदो तदो ।

पुरुषः । एक्कशिशं दिअशे खण्डशो लोहिअमच्छे मए कप्पिदे जाव । तश्श उदलब्भन्तले एदं लदणभाशुलं अङ्गुलीअअं देक्खिअ । पच्छा अह्के शे विक्कआअ दंशअन्ते गहिदे भावमिश्शेहिं । मालेह वा । मुञ्चेह वा । अअं शे आअमवुत्तन्ते ।

श्यालः । जाणुअ । विस्सगन्धी गोहादी मच्छबन्धो एव्व णिस्संसअं । अङ्गुलीअअदंसणं से विमरिसिदव्वं । राउलं एव्व गच्छामो ।

रक्षिणौ । तह ।

श्यालः । गच्छ अरे गण्डभेदअ ।

॥ सर्वे परिक्रामन्ति ॥

श्यालः । सूचअ । इमं पुरदुवारे अप्पमत्ता पडिबालह । जाव इमं अङ्गुलीअअं जहागमणं भट्टिणो णिवेदिअ तदो सासणं पडिच्छिअ णिक्कमामि ।

उभौ । पविशदु आबुत्ते शामिपशादश्श ।

॥ निष्क्रान्तः श्यालः ॥

प्रथमः । जाणुअ । चिलाअदि खु आबुत्ते ।

द्वितीयः । णं अवशलोबशप्पणीआ लाआणो ।

प्रथमः । जाणुअ । फुलन्ति मे हत्था इमश्श वज्झश्श शुमणो

पिणड्ढुं । इति पुरुषं निर्दिशति ।

पुरुषः । ण अलुह्दि भावे अकालणमालणे भविडुं ।

द्वितीयः । विलोक्य । एशे अम्ह्राणं शामी पत्तह्त्थे लाअशाशणं पडिच्छिअ इदोमुह्रे देक्खीअदि । गिड्ढवली भविश्शशि । अुणो मुह्रं वा देक्खिश्शशि ।

प्रविश्य

श्यालः । सूअअ । मुञ्चेदु एसो जालोअजीवी । उबबण्णो किल अअं अङ्गुलीअअस्स आअमो ।

सूचकः । जह्र आबुत्ते भणादि ।

द्वितीयः । एशे जमशदणं पविशिअ पडिणिवुत्ते । इति पुरुषं परिमुक्तबन्धनं करोति ।

पुरुषः । श्यालं प्रणम्य । भट्टा । अह्र कीलिशे मे आजीवे ।

श्यालः । एस भट्टिणा अङ्गुलीअअमुल्लसंमिदो पसादोबि दाबिदो । इति पुरुषायार्थं प्रयच्छति ।

पुरुषः । सप्रणामं प्रतिगृह्य । भट्टकेण अणुग्गह्रिदम्हि ।

सूचकः । एशे णाम अणुग्गह्रे । जे शूलादो अवदालिअ ह्त्थिक्कन्धे पडिट्ठाबिदे ।

जानुकः । आबुत्त । पलिदोशं कह्रेदि । तेण अङ्गुलीअएण भट्टिणो शंमदेण ह्रोदव्वं ।

श्यालः । ण तस्सिं मह्रारुह्रं रदणं भट्टिणो बहुमदंत्ति तक्केमि । तस्स दंसणे भट्टिणो अभिमदो जणो सुमरिदो । मुहुत्तअं पकिदिगम्भीरोबि पज्जस्सुणअणो आसि ।

सूचकः । शेविदं णाम आबुत्तेण ।

जानुकः । णं भणाहि । इमश्श कए मच्छिआभत्तुणोत्ति ।

इति पुरुषमसूयया पश्यति ।

पुरुषः । भट्टालके । इदो अद्धं तुम्हाणं सुमणोमुल्लं होदु ।

जानुकः । एत्तके जुज्जइ ।

श्यालः । धीवर । महत्तरो तुमं पिअवअस्सको दाणिं मे संवुत्तो । कादम्बरीसक्खिअं अम्हाणं पढमसोहिदं इच्छीअदि । ता सोण्डिआपणं एव्व गच्छामो ।

सर्वे । तह ।

॥ इति निष्क्रान्ताः सर्वे ॥

॥ प्रवेशकः ॥

॥ ततः प्रविशत्याकाशयानेन सानुमती नामाप्सराः ॥

सानुमती । णिव्वत्तिदं मए पज्जाअणिव्वत्तणिज्जं अच्छरातित्थसंणिज्कं । जाव साहुजणस्स अभिसेअकालोत्ति संपदं इमस्स राएसिणो उदन्तं पच्चक्खीकरिस्सं । णं मेणआसंबन्धेण सरीरभूदा दाणिं मे सउन्दला । ताएअ दुहिदुणिमित्तं आदिट्ठपुव्वम्हि । समन्तादवलोक्य । किं णुक्खु उदुच्छवेबि णिरुच्छवारम्भं विअ एदं राअउलं दीसइ । अत्थि मे विहवो पणिधाणेण सव्वं परिणादुं । किंदु सहीए आदरो मए माणइदव्वो । होदु । इमाणं एव्व उज्जाणपालिआणं तिरक्खरिणीपरिच्छण्णा पस्सपरिवत्तिणी भविअ उबलम्भिस्सं । इति नाट्येनावतीर्य स्थिता ।

॥ ततः प्रविशति चूतांकुरमवलोकयन्ती चेटी । अपरा च पृष्ठतस्तस्याः ॥

प्रथमा ।

आअम्बहरिअपण्डुर वसन्तमासस्स जीअसव्वस्स ।
दिट्ठोसि चूदकोरअ उदुमङ्गलं तुमं पसाएमि ॥ १२१ ॥

द्वितीया । परहुदिए । किं एआइणी मन्तेसि ।

प्रथमा । महुअरिए । चूदकलिअं देक्खिअ उम्मत्तिआ परहुदिआ होदि ।

द्वितीया । सहर्षं त्वरयोपगम्य । कहं उवट्ठिदो महुमासो ।

प्रथमा । महुअरिए । तव दाणिं कालो एसो मदविब्भमगीदाणं ।

द्वितीया । सहि । अवलम्ब मं । जाव अग्गपादट्ठिआ भविअ चूदकलिअं गेण्हिअ कामदेवच्चणं करेमि ।

प्रथमा । जइ ममबिक्खु अद्धं अच्चणफलस्स ।

द्वितीया । अकहिदेबि एदं संपज्जइ । जदो एक्कं एव्व णो जीविदं । दुधाठिदं सरीरं । सखीमवलम्ब्य स्थिता चूतांकुरं गृह्णाति । अए । अप्पडिबुद्धोबि चूदप्पसवो एत्थ बन्धणभङ्गसुरभी होदि । कपोतहस्तकं कृत्वा ।

तुंसि मए चूदङ्कुर दिण्णो कामस्स गहिदधणुअस्स ।
पहिअजणजुवइलक्खो पञ्चब्भहिओ सरो होहि ॥ १३० ॥

इति चूतांकुरं क्षिपति ।

प्रविश्य पटाक्षेपेण कुपितः

कञ्चुकी । मा तावदनात्मज्ञे । देवेन प्रतिषिद्धे वसन्तोत्सवे त्वमाम्रकलिकाभङ्गं किमारभसे ।

उभे । भीते । पसीददु अज्जो । अग्गहीदत्थाओ वअं ।

कञ्चुकी । न किल श्रुतं युवाभ्यां । यद्वासन्तिकैस्तरुभिरपि देवस्य शासनं प्रमाणीकृतं । तदाश्रयिभिः पत्रिभिश्च । तथा हि

चूतानां चिरनिर्गतापि कलिका बध्नाति न स्वं रजः
संनद्धं यदपि स्थितं कुरुवकं तत्कोरकावस्थया ।
कण्ठेषु स्खलितं गते ऽपि शिशिरे पुंस्कोकिलानां रुतं
शङ्के संहरति स्मरो ऽपि चकितस्तूर्णार्धकृष्टं शरं ॥ १३१ ॥

उभे । णत्थि संदेहो । महप्पहावो राएसी ।

प्रथमा । अज्ज । कति दिअहाइं अम्हाणं मित्तावसुणा रट्ठिएण भट्टिणो पाअमूलं पेसिदाणं । इत्थं च णो पमदवणस्स पालणकम्म समप्पिदं । ता आअन्तुअदाए अस्सुदपुव्वो अम्हेहिं एसो वुत्तन्तो ।

कञ्चुकी । भवतु । न पुनरेवं प्रवर्तितव्यं ।

उभे । अज्ज । कोदूहलं णो । जइ इमिणा जणेण सोदव्वं । कहेदु भअं । किंणिमित्तं भट्टिणा वसन्तूसवो पडिसिद्धो ।

सानुमती । उस्सवप्पिआ खु मणुस्सा । गरुणा कारणेण होदव्वं ।

कञ्चुकी । बहुलीभूतमेतत्किं न कथ्यते । किमत्रभवत्योः कर्णपथं नायातं शकुन्तलाप्रत्यादेशकौलीनं ।

उभे । सुदं रट्ठिणो मुहादो जाव अङ्गुलीअअदंसणं ।

कञ्चुकी । तेन ह्यल्पं कथयितव्यं । यदैव खलु स्वाङ्गुलीयकदर्शनादनुस्मृतं देवेन । सत्यमूढपूर्वा मया तत्रभवती रहसि शकुन्तला मोहात्प्रत्यादिष्टेति । तदा प्रभृत्येव पश्चात्तापमुपगतो देवः । तथा हि

रम्यं द्वेष्टि यथा पुरा प्रकृतिभिर्न प्रत्यहं सेव्यते
शय्याप्रान्तविवर्तनैर्विगमयत्युन्निद्र एव क्षपाः ।
दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदा
गोत्रेषु स्खलितस्तदा भवति च व्रीडाविलक्षश्चिरं ॥ १३२ ॥

सानुमती । पिअं मे ।

कञ्चुकी । अस्मात्प्रभवतो वैमनस्यादुत्सवः प्रत्याख्यातः ।

उभे । जुज्जइ ।

नेपथ्ये । एदु एदु भवं ।

कञ्चुकी । कर्णं दत्वा । अये । इत एवाभिवर्तते देवः । स्वकर्मानुष्ठीयतां ।

उभे । तह । इति निष्क्रान्ते ।

॥ ततः प्रविशति पश्चात्तापसदृशवेशो राजा विदूषकः प्रतीहारी च ॥

कञ्चुकी । राजानमवलोक्य । अहो सर्वास्ववस्थासु रमणीयत्वमाकृतिविशेषाणां । एवमुत्सुको ऽपि प्रियदर्शनो देवः । तथा हि

प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठार्पितं
बिभ्रत्काञ्चनमेकमेव वलयं श्वासापरक्ताधरः ।
चिन्ताजागरणप्रताम्रनयनस्तेजोगुणादात्मनः
संस्कारोल्लिखितो महामणिरिव क्षीणो ऽपि नालक्ष्यते ॥ १३३ ॥

सानुमती । राजानं दृष्ट्वा । ठाणेक्खु पच्चादेसविमाणिदाबि इमस्स किदे सउन्दला किलम्मदित्ति ।

राजा । ध्यानमन्दं परिक्रम्य ।

प्रथमं सारंगाक्ष्या प्रियया प्रतिबोध्यमानमपि सुप्तं ।
अनुशयदुःखायेदं हतहृदयं संप्रति विबुद्धं ॥ १३४ ॥

सानुमती । णं ईदिसाणि तवस्सिणीए भाअहेआणि ।

विदूषकः । अपवार्य । लङ्घिदो एसो भूओबि सउन्दलावाहिणा । ण आणे । कहं चिकिच्छिदव्वो भविस्सदित्ति ।

कञ्चुकी । उपगम्य । जयतु जयतु देवः । महाराज । प्रत्यवेक्षिताः प्रमदवनभूमयः । यथाकाममध्यास्तां विनोदस्थानानि महाराजः ।

राजा । वेत्रवति । मद्वचनादमात्यमार्यपिशुनं ब्रूहि । चिरप्रबो

धान्न संभावितमस्माभिरद्य धर्मासनमध्यासितुं । यत्प्रत्यवेक्षितं पौरकार्यमार्येण । तत्पत्रमारोप्य दीयतामिति ।

प्रतीहारी । जं देवो आणवेदि । इति निष्क्रान्ता ।

राजा । वातायन । त्वमपि स्वं नियोगमशून्यं कुरु ।

कञ्चुकी । यदाज्ञापयति देवः । इति निष्क्रान्तः ।

विदूषकः । किदं भवदा णिम्मक्खिअं । संपदं सिसिरातवच्छेअरमणीए इमस्सिं पमदवणुद्देसे अत्ताणं रमइस्ससि ।

राजा । वयस्य । रन्ध्रोपनिपातिनो ऽनर्था इति यदुच्यते । तदव्यभिचारि वचः । कुतः ।

मुनिसुताप्रणयस्मृतिरोधिना
मम च मुक्तमिदं तमसा मनः ।
मनसिजेन सखे प्रहरिष्यता
धनुषि चूतशरश्च निवेशितः ॥ १३५ ॥

विदूषकः । चिट्ठ दाव । जाव इमिणा दण्डकट्ठेण कन्दप्पव्वाहिं णासइस्सामि । इति दण्डकाष्ठमुद्यम्य चूतांकुरं पातयितुमिच्छति ।

राजा । सस्मितं । भवतु । दृष्टं ब्रह्मवर्चसं । सखे । क्वोपविष्टः प्रियायाः किंचिदनुकारिणीषु लतासु दृष्टिं विलोभयामि ।

विदूषकः । णं आसण्णपरिआरिआ चदुरिआ भवदा संदिट्ठा । माहवीमण्डबे इमं वेलं अदिवाहिस्सं । तहिं मे चित्तफलअगदं सहत्थलिहिदं तत्तहोदीए सउन्दलाए पडिकिदिं आणेहित्ति ।

राजा । ईदृशं हृदयविनोदस्थानं । तत्तमेव मार्गमादेशय ।

विदूषकः । इदो इदो भवं ।

॥ उभौ परिक्रामतः । सानुमत्यनुगच्छति ॥

विदूषकः । एसो मणिसिलापट्टअसणाहो माहवीमण्डवो उव हाररमणिज्जदाए णिस्संसअं साअदेण विअ णो पडिच्छदि । ता पविसिअ णिसीदटु भवं ।

॥ उभौ प्रवेशं कृत्वोपविष्टौ ॥

सानुमती । लदासंस्सिदा देक्खिस्सं दाव सहीए पडिकिदिं । तदो से भत्तुणो बहुमुहं अणुराअं णिवेदइस्सं । इति तथा कृत्वा स्थिता ।

राजा । सखे । सर्वमिदानीं स्मरामि शकुन्तलायाः प्रथमवृत्तान्तं । कथितवानस्मि भवते च । स भवान्प्रत्यादेशवेलायां मत्समीपमुपग तो नासीत् । पूर्वमपि न त्वया कदाचित्संकीर्तितं तत्रभवत्या ना म । कच्चिदहमिव विस्मृतवानसि त्वं ।

विदूषकः । ण विसुमरामि । किंतु सव्वं कहिअ अवसाणे उण तुए परिहासविअप्पओ एसो ण भूदत्थोत्ति आचक्खिदं । मएबि मिप्पिण्डबुद्धिणा तह एव्व गहीदं । अहवा भविदव्वदा बलवदी ।

सानुमती । एव्वं णेदं ।

राजा । ध्यात्वा । सखे । त्रायस्व मां ।

विदूषकः । भो । किं एदं । अणुववण्णंक्खु ईदिसं तुइ । क दाबि सप्पुरिसा सोअवत्तव्वा ण होन्ति । णं पवादेबि णि क्कम्पा गिरीओ ।

राजा । वयस्य । निराकरणविक्लवायाः प्रियायाः समवस्थामनुस्मृ त्य बलवदशरणो ऽस्मि । सा हि

इतः प्रत्यादेशात्स्वजनमनुगन्तुं व्यवसिता
मुहुस्तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे ।

पुनर्दृष्टिं बाष्पप्रकरकलुषामर्पितवती
मयि क्रूरे यत्तत्सविषमिव शल्यं दहति मां ॥ १३६ ॥

सानुमती । अम्महे । ईदिसी सकज्जपरदा । इमस्स संदावेण अहं रमामि ।

विदूषकः । भो । अत्थि मे तक्को । केणवि तत्तहोदी आआसचारिणा णीदेत्ति ।

राजा । कः पतिदेवतामन्यः परिमार्ष्टुमुत्सहेत । मेनका किल सख्यास्ते जन्मप्रतिष्ठेति श्रुतवानस्मि । तत्सहचारिणीभिः सखी ते हृतेति मे हृदयमाशङ्कते ।

सानुमती । संमोहोक्खु विम्हअणिज्जो । ण पडिबोहो ।

विदूषकः । जइ एव्वं । अत्थिक्खु समाअमो कालेण तत्तहोदीए ।

राजा । कथमिव ।

विदूषकः । णक्खु मादापिदरा भत्तुविओअदुक्खिदं दुहिदरं देक्खिदुं पारेन्ति ।

राजा । वयस्य ।

स्वप्नो नु माया नु मतिभ्रमो नु
क्लिष्टं नु तावत्फलमेव पुण्यं ।
असंनिवृत्त्यै तदतीतमेते
मनोरथानामतटप्रपाताः ॥ १३७ ॥

विदूषकः । मा एव्वं । णं अङ्गुलीअअं एव्व णिदंसणं । अवस्संभाविणो अचिन्तणिज्जो समाअमो होदित्ति ।

राजा । अंगुलीयकं विलोक्य । अये । इदं तावदसुलभस्थानभ्रंशि शो

चनीयं ।

तव सुचरितमङ्गुलीय नूनं
प्रतनु ममेव विभाव्यते फलेन ।
अरुणनखमनोरमासु तस्या
श्च्युतमसि लब्धपदं यदङ्गुलीषु ॥ १३८ ॥

सानुमती । जइ अण्णहत्थगदं भवे । सच्चं एव्व सोअणिज्जं भवे ।

विदूषकः । भो । इअं णाम मुद्दा केण उद्देसेण तत्तहोदीए हत्थसंसग्गं पाविदा ।

सानुमती । ममवि कोदूहल्लेण आआरिदो एसो ।

राजा । श्रूयतां । तदा स्वनगराय प्रस्थितं मां प्रिया सवाष्पमाह । कियच्चिरेणार्यपुत्रः प्रतिपत्तिं दास्यतीति ।

विदूषकः । तदो तदो ।

राजा । पश्चादिमां मुद्रां तदङ्गुलौ निवेशयता मया प्रत्यभिहिता ।

एकैकमत्र दिवसे दिवसे मदीयं
नामाक्षरं गणय गच्छति यावदन्तं ।
तावत्प्रिये मदवरोधगृहप्रवेशं
नेता जनस्तव समीपमुपैष्यतीति ॥ १३९ ॥

तच्च दारुणात्मना मया मोहान्नानुष्ठितं ।

सानुमती । रमणीओक्खु अवही विहिणा विसंवादिदो ।

विदूषकः । कहं धीवलकप्पिअस्स लोहिअमच्छस्स उदलब्भन्तले आसि ।

राजा । शचीतीर्थं वन्दमानायाः सख्यास्ते हस्ताद्गङ्गास्रोतसि परिभ्रष्टं ।

विदूषकः । जुज्जइ ।

सानुमती । अदो एव्व तवस्सिणीए सउन्दलाए अधम्मभीरुणो इमस्स राएसिणो परिणए संदेहो आसि । अहवा । ईदिसो अ णुराओ अहिणाणं पेक्खदि । कहं विअ एदं ।

राजा । उपालप्स्ये तावदिदमङ्गुलीयकं ।

विदूषकः । आत्मगतं । गहीदो णेण पन्था उम्मत्तआणं ।

राजा ।

कथं नु तं बन्धुरकोमलाङ्गुलिं
करं विहायासि निमग्नमम्भसि ।

अथवा । अचेतनं नाम गुणं न लक्षये
न्मयैव कस्मादवधीरिता प्रिया ॥ १४० ॥

विदूषकः । आत्मगतं । कहं बुभुक्खाए खादइदव्वोम्हि ।

राजा । अकारणपरित्यक्ते । अनुशयतप्तहृदयस्तावदनुकम्प्यतामयं जनः पुनर्दर्शनेन ।

प्रविश्य पटाक्षेपेण चित्रफलकहस्ता

चतुरिका । इअं चित्तगदा भट्टिणी । इति चित्रफलकं दर्शयति ।

विदूषकः । साहु वअस्स । महुरावत्थाणदंसणिज्जो भावाणुप्पवेसो । खलदि विअ मे दिट्ठी णिण्णुण्णअप्पदेसेसु ।

सानुमती । अम्मो एसा राएसिणो णिउणदा । जाणे । सही अग्गदो मे वट्टदित्ति ।

राजा ।

यद्यत्साधु न चित्रे स्यात्क्रियते तत्तदन्यथा ।
तथापि तस्या लावण्यं रेखया किंचिदन्वितं ॥ १४१ ॥

सानुमती । सरिसं एव्वं पच्छादावगरुणो सिणेहस्स अणवलेवस्सअ ।

विदूषकः । भो । दाणिं तिण्णि तत्तहोदीओ दीसन्ति । सव्वा ओअ दंसणीआओ । कदमा एत्थ तत्तहोदी सउन्दला ।

सानुमती । अणभिण्णोक्खु ईदिसस्स रूवस्स मोहदिट्ठी अअं जणो ।

राजा । त्वं तावत्कतमां तर्कयसि ।

विदूषकः । तक्केमि । जा एसा सिढिलकेसबन्धणुव्वन्तकुसुमेण केसन्तेण उब्भिण्णस्सेअविन्दुणा वअणेण विसेसदो ओसरिआहिं बाहाहिं अवसेअसिणिद्धतरुणपल्लवस्स चूअपाअवस्स पासे ईसिपरिस्सन्ता विअ आलिहिदा । एसा सउन्दला । इदराओ सहीओत्ति ।

राजा । निपुणो भवान् । अस्त्यत्र मे भावचिह्नं ।

स्विन्नाङ्गुलिविनिवेशो रेखाप्रान्तेषु दृश्यते मलिनः ।
अश्रु च कपोलपतितं दृश्यमिदं वर्तिकोच्छ्वासात् ॥ १४२ ॥

चतुरिके । अर्धलिखितमेतद्विनोदस्थानं । तस्माद्गच्छ । वर्तिकां तावदानय ।

चतुरिका । अज्जमाठव्व । अवलम्ब चित्तफलअं । जाव आअच्छामि ।

राजा । अहमेवैतदवलम्बे । इति यथोक्तं करोति ।

॥ निष्क्रान्ता चेटी ॥

राजा । अहं हि

साक्षात्प्रियामुपगतामपहाय पूर्वं
चित्रार्पितां पुनरिमां बहुमन्यमानः ।
स्रोतोवहां पथि निकामजलामतीत्य
जातः सखे प्रणयवान्मृगतृष्णिकायां ॥ १४३ ॥

विदूषकः । आत्मगतं । एसो अत्तभवं णदिं अदिक्कमिअ मिअतिण्हिआए संकन्तो । प्रकाशं । भो । अवरं किं एत्थ लिहिदव्वं ।

सानुमती । जो जो पदेसो सहीए मे अहिरूवो । तं तं आलिहिदुकामो भवे ।

राजा । श्रूयतां ।

कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी
पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः ।
शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीं ॥ १४४ ॥

विदूषकः । आत्मगतं । जह अहं देक्खामि । पूरिदव्वं णेण चित्तफलअं लम्बकुच्चाणं तावसाणं कदम्बेहिं ।

राजा । वयस्य । अन्यच्च शकुन्तलायाः प्रसाधनमभिप्रेतमत्र विस्मृतमस्माभिः ।

विदूषकः । किं विअ ।

सानुमती । वणवासस्स सोउमारस्सअ जं सरिसं भविस्सदि ।

राजा ।

कृतं न कर्णार्पितबन्धनं सखे
शिरीषमागण्डविलम्बिकेसरं ।

न वा शरच्चन्द्रमरीचिकोमलं
मृणालसूत्रं रचितं स्तनान्तरे ॥ १४५ ॥

विदूषकः । भो । किं णु तत्तहोदी रत्तकुवलअपल्लवसोहिणा अग्गहत्थेण मुहं आवारिअ चइदचइदा विअ ठिदा । सावधानं निरूप्य । दृष्ट्वा । आ । एसो दासीएपुत्तो कुसुमरसपाडच्चरो तत्तहोदीए वअणं अहिलङ्घदि महुअरो ।

राजा । ननु वार्यतामेष धृष्टः ।

विदूषकः । भवं एव्व अविणीदाणं सासिदा इमस्स वारणे पहविस्सदि ।

राजा । युज्यते । अयि भोः कुसुमलताप्रियातिथे । किमत्र परिपतनखेदमनुभवसि ।

एषा कुसुमनिषण्णा तृषितापि सती भवन्तमनुरक्ता ।
प्रतिपालयति मधुकरी न खलु मधु विना त्वया पिबति ॥ १४६ ॥

सानुमती । अज्ज अभिजादंक्खु एसो वारिदो ।

विदूषकः । पडिसिद्धाबि वामा एसा जादी ।

राजा । एवं भो न मे शासने तिष्ठसि । श्रूयतां तर्हि संप्रति ।

अक्लिष्टबालतरुपल्लवलोभनीयं
पीतं मया सदयमेव रतोत्सवेषु ।
बिम्बाधरं स्पृशसि चेद्भमर प्रियाया
स्त्वां कारयामि कमलोदरबन्धनस्थं ॥ १४७ ॥

विदूषकः । एव्वंतिक्खणदण्डस्स किं ण भाइस्सदि । प्रहस्य । आत्मगतं । एसो दाव उम्मत्तो । अहंपि एदस्स संगेण ईदिसवअणो

विश्र संवुत्तो । प्रकाशं । भो । चित्तंक्खु एदं ।

राजा । कथं चित्रं ।

सानुमती । ग्रहंपि दाणिं ग्रवगदत्था । किं उण जहालिहि दाणुभावी एसो ।

राजा । वयस्य । किमिदमनुष्ठितं पौरोभाग्यं ।

दर्शनसुखमनुभवतः साक्षादिव तन्मयेन हृदयेन ।
स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता ॥ १४८ ॥

इति वाष्पं विहरति ।

सानुमती । पुव्वाबरविरोहो ग्रपुव्वो एसो विरहमग्गो ।

राजा । वयस्य । कथमेवमविश्रान्तदुःखमनुभवामि ।

प्रजागरात्खिलीभूतस्तस्याः स्वप्ने समागमः ।
वाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ॥ १४९ ॥

सानुमती । सव्वहा पमज्जिदं तुए पच्चादेसदुक्खं सउन्दलाए ।

प्रविश्य

चतुरिका । जेदु जेदु भट्टा । वट्टिग्राकरण्डग्रं गेण्हिग्र इदोमुहं पत्थिदम्हि ।

राजा । किं च ।

चतुरिका । सो मे हत्थादो ग्रन्तरा तरलिग्राउदिग्राए देवीए वसुमदीए ग्रहं एव्व ग्रज्जउत्तस्स उबणइस्संत्ति सबलक्कारं गहिदो ।

विदूषकः । दिट्ठिग्रा तुमं मुक्का ।

चतुरिका । जाव देवीए विडबलग्गं उत्तरीग्रं तरलिग्रा मोचेदि । ताव मए णिव्वाहिदो ग्रत्ता ।

राजा । वयस्य । उपस्थिता देवी बहुमानगर्विता च । भवा निमां प्रतिकृतिं रक्षतु ।

विदूषकः । अत्ताणंत्ति भणाहि । चित्रफलकमादायोत्थाय च । जइ भवं अन्तेउरकालकूडादो मुच्चीअदि । तदो मं मेहप्पडिच्छन्दे पासा दे सद्दाबेहि । इति द्रुतपदं निष्क्रान्तः ।

सानुमती । अण्णसंकन्तहिअओबि पढमसंभावणं अबेक्खदि । अदिसिढिलसोहृदो दाणिं एसो ।

प्रविश्य पत्रहस्ता

प्रतीहारी । जेदु जेदु देवो ।

राजा । वेत्रवति । न खल्वन्तरा दृष्टा त्वया देवी ।

प्रतीहारी । अहइं । पत्तहत्थं मं देक्खिअ पडिणिउत्ता ।

राजा । कार्यज्ञा कार्योपरोधं मे परिहरति ।

प्रतीहारी । देव । अमच्चो विण्णबेदि । अत्थजादस्स गणणाबहु लदाए एक्कं एव्व पोरकज्जं अबेक्खिदं । तं देवो पत्तारूढं पच्च क्खीकरेदुत्ति ।

राजा । इतः पत्रिकां दर्शय ।

॥ प्रतीहार्युपनयति ॥

राजा । अनुवाच्य । कथं । समुद्रव्यवहारी सार्थवाहो धनमित्रो ना म नौव्यसने विपन्नः । अनपत्यश्च किल तपस्वी । राजगामी तस्या र्थसंचय इत्येतदमात्येन लिखितं । कष्टं खल्वनपत्यता । बहुधन त्वाद्बहुपत्नीकेन तत्रभवता भवितव्यं । विचार्यतां । यदि काचिदा पन्नसत्वा तस्य भार्यासु स्यात् ।

प्रतीहारी । देव । दाणिं एव्व साकेदअस्स सेट्ठिणो दुहिआ

णिव्वुत्तपुंसवणा से जाआ सुणीअदि ।

राजा । ननु गर्भः पित्र्यं रिक्थमर्हति । गच्छ । एवममात्यं ब्रूहि ।

प्रतीहारी । जं देवो आणवेदि । इति प्रस्थिता ।

राजा । एहि तावत् ।

प्रतीहारी । इअम्हि ।

राजा । किमनेन संततिरस्ति नास्तीति ।

येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना ।
स स पापादृते तासां दुष्यन्त इति घुष्यतां ॥ १५० ॥

प्रतीहारी । एव्वं णाम घोसइदव्वं । निष्क्रम्य । पुनः प्रविश्य । काले पवुट्ठं विअ अहिणन्दिदं देवस्स सासणं ।

राजा । दीर्घमुष्णं च निःश्वस्य । एवं भोः संततिच्छेदनिरवलम्बानां कुलानां मूलपुरुषावसाने संपदः परमुपतिष्ठन्ति । ममाप्यन्ते पुरुवंश श्रीरकाल इवोप्तबीजा भूरेवंवृत्ता ।

प्रतीहारी । पडिहदं अमङ्गलं ।

राजा । धिङ्मामुपस्थितश्रेयोवमानिनं ।

सानुमती । असंसअं सहिं एव्व हिअए करिअ णिन्दिदो णेण अप्पा ।

राजा ।

संरोपिते ऽप्यात्मनि धर्मपत्नी
त्यक्ता मया नाम कुलप्रतिष्ठा ।
कल्पिष्यमाणा महते फलाय
वसुंधरा काल इवोप्तबीजा ॥ १५१ ॥

सानुमती । अपरिच्छिण्णा दाणिं दे संददी भविस्सदि ।

चतुरिका । जनान्तिकं । अए । इमिणा सत्थवाहवुत्तन्तेण विउणुव्वेओ भट्टा । णं अस्सासिदुं मेहप्पडिच्छन्दादो अज्जं माढव्वं गेण्हिअ आअच्छेहि ।

प्रतीहारी । सुट्ठु भणासि । इति निष्क्रान्ता ।

राजा । अहो दुष्यन्तस्य संशयमारूढाः पिण्डभाजः । कुतः ।

अस्मात्परं बत यथाश्रुतिसंभृतानि
को नः कुले निवपनानि नियच्छतीति ।
नूनं प्रसूतिविकलेन मया प्रसिक्तं
धौताश्रुशेषमुदकं पितरः पिबन्ति ॥ १५२ ॥

इति मोहमुपागतः ।

चतुरिका । ससंभ्रममवलोक्य । समस्ससदु समस्ससदु भट्टा ।

सानुमती । हद्धी हद्धी । सदिक्खु दीवे ववधाणदोसेण एसो अन्धआरदोसं अणुहोदि । अहं दाणिं एव्व णिव्वुदं करेमि । अहवा । सुदं मए सउन्दलं समस्सासअन्तीए महेन्दजणणीए मुहादो । जण्णभाओसुआ देवा एव्व तह अणुचिट्ठिस्सन्ति । जह अइरेण धम्मपदिणिं भट्टा अहिणन्दिस्सदित्ति । ता ण जुत्तं कालं पडिपालिदुं । जाव इमिणा वुत्तन्तेण पिअसहिं समस्सासेमि । इत्युद्भ्रान्तकेन निष्क्रान्ता ।

नेपथ्ये । अब्बम्हण्णं अब्बम्हण्णं ।

राजा । प्रत्यागतः कर्णं दत्वा । अये । माढव्यस्येवार्त्तस्वरः । कः कोऽत्र भोः ।

प्रतीहारी । परित्ताअदु देवो संसअगदं वअस्सं ।

राजा । केनात्तगन्धो माणवकः ।

प्रतीहारी । अदिट्ठरूवेण केणावि सत्तेण अदिक्कमिअ मेहप्पडिच्छन्दस्स पासादस्स अग्गभूमिं आरोविदो ।

राजा । उत्थाय । मा तावत् । ममापि सत्त्वैरभिभूयन्ते गृहाः । अथवा ।

अहन्यहन्यात्मन एव ताव
ज्ज्ञातुं प्रमादस्खलितं न शक्यं ।
प्रजासु कः केन पथा प्रयाती
त्यशेषतो वेदितुमस्ति शक्तिः ॥ १५३ ॥

नेपथ्ये । भो वअस्स । अविह अविह ।

राजा । गतिभेदेन परिक्रामन् । सखे । न भेतव्यं न भेतव्यं ।

नेपथ्ये । पुनस्तदेव पठित्वा । कहं ण भाइस्सं । एस मं कोवि पच्चवणादसिरोहरं इक्खुं विअ तिण्णभङ्गं करेदि ।

राजा । सदृष्टिक्षेपं । धनुस्तावत् ।

प्रविश्य शार्ङ्गहस्ता

यवनी । भट्टा । एदं हत्थावावसहिदं सरासणं ।

॥ राजा सशरं धनुरादत्ते ॥

नेपथ्ये ।

एष त्वामभिनवकण्ठशोणितार्थी
शार्दूलः पशुमिव हन्मि चेष्टमानं ।
आर्त्तानां भयमपनेतुमात्तधन्वा
दुष्यन्तस्तव शरणं भवत्विदानीं ॥ १५४ ॥

राजा । सरोषं । कथं मामेवोद्दिशति । तिष्ठ कुणपाशन । त्व मिदानीं न भविष्यसि । शार्ङ्गमारोप्य । वेत्रवति । सोपानमार्गमादेशय ।

प्रतीहारी । इदो इदो देवो ।

॥ सर्वे सत्वरमुपसर्पन्ति ॥

राजा । समन्ताद्विलोक्य । शून्यं खल्विदं ।

नेपथ्ये । अविह अविह । अहं अत्तभवन्तं पेक्खामि । तुमं मं ण पेक्खसि । विडालग्गहिदो मूसओ विअ णिरासोम्हि जीविदे संवुत्तो ।

राजा । भोस्तिरस्करिणीगर्वित । मदीयं शस्त्रं त्वां द्रक्ष्यति । एष तमिषुं संदधे ।

यो हनिष्यति बध्यं त्वां रक्ष्यं रक्षति च द्विजं ।
हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः ॥ १५५ ॥

इति च शस्त्रं संधत्ते ।

॥ ततः प्रविशति विदूषकमुत्सृज्य मातलिः ॥

मातलिः ।

कृताः शरव्यं हरिणा तवासुराः
शरासनं तेषु विकृष्यतामिदं ।
प्रसादसौम्यानि सतां सुहृज्जने
पतन्ति चक्षूंषि न दारुणाः शराः ॥ १५६ ॥

राजा । अस्त्रमुपसंहरन् । अये मातलिः । स्वागतं महेन्द्रसारथे ।

प्रविश्य

विदूषकः । अहं जेण इट्ठिपसुमारं मारिदो । सो इमिणा सा अदेण अहिणन्दीअदि ।

मातलिः । सस्मितं । आयुष्मन् । श्रूयतां । यदस्मि हरिणा भवत्सकाशं प्रेषितः ।

राजा । अवहितो ऽस्मि ।

मातलिः । अस्ति कालनेमिप्रसूतिर्दुर्जयो नाम दानवगणः ।

राजा । अस्ति श्रुतपूर्वं मया नारदात् ।

मातलिः ।

सख्युस्ते स किल शतक्रतोरजय्य
स्तस्य त्वं रणशिरसि स्मृतो निहन्ता ।
उच्छेत्तुं प्रभवति यन्न सप्तसप्ति
स्तन्नैशं तिमिरमपाकरोति चन्द्रः ॥ १५७ ॥

स भवानात्तशस्त्र एवमिदानीं तमैन्द्ररथमारुह्य विजयाय प्रतिष्ठतां ।

राजा । अनुगृहीतो ऽहमनया मघवतः संभावनया । अथ माठव्यं प्रति भवता किमेवं प्रयुक्तं ।

मातलिः । तदपि कथ्यते । किंचिन्निमित्तादपि मनःसंतापादायुष्मान्मया विक्लवो दृष्टः । पश्चात्कोपयितुमायुष्मन्तं तथा कृतवानस्मि । कुतः ।

ज्वलति चलितेन्धनो ऽग्निर्विप्रकृतः पन्नगः फणां कुरुते ।
प्रायः स्वं महिमानं क्षोभात्प्रतिपद्यते हि जनः ॥ १५८ ॥

राजा । जनान्तिकं । वयस्य । अनतिक्रमणीया दिवस्पतेराज्ञा । तदत्र परिगतार्थं कृत्वा मद्वचनादमात्यपिशुनं ब्रूहि ।

त्वन्मतिः केवला तावत्परिपालयितुं प्रजाः ।
अधिज्यमिदमन्यस्मिन्कर्मणि व्यापृतं धनुः ॥ १५९ ॥

इति ॥

विदूषकः । जं भवं आणवेदि । इति निष्क्रान्तः ।

मातलिः । आयुष्मान्रथमारोहतु ।

॥ राजा रथारोहणं नाटयति ॥

॥ इति निष्क्रान्ताः सर्वे ॥

## ॥ षष्ठो ऽङ्कः ॥

——॥०॥——

॥ ततः प्रविशत्याकाशयानेन रथाधिरूढो राजा मातलिश्च ॥

राजा । मातले । अनुष्ठितनिदेशो ऽपि मघवतः सत्क्रियाविशेषादनुपयुक्तमिवात्मानं समर्थये ।

मातलिः । सस्मितं । आयुष्मन् । उभयमप्यपरितोषं समर्थये ।

प्रथमोपकृतं मरुत्वतः
प्रतिपत्त्या लघु मन्यते भवान् ।
गणयत्यवदानतोषितो
भवतः सो ऽपि न सत्क्रियागुणान् ॥ १६० ॥

राजा । मातले । मा मैवं । स खलु मनोरथानामप्यभूमिर्विसर्जनावसरसत्कारः । मम हि दिवौकसां समक्षमर्धासनोपवेशितस्य

अन्तर्गतप्रार्थनमन्तिकस्थं
जयन्तमुद्वीक्ष्य कृतस्मितेन ।
आमृष्टवक्षोहरिचन्दनाङ्का
मन्दारमाला हरिणा पिनद्धा ॥ १६१ ॥

मातलिः । किमिव नामायुष्मानमरेश्वरान्नार्हति । पश्य ।

सुरसखस्य हरेरुभयैः कृतं
त्रिदिवमुद्धृतदानवकण्टकं ।

तव शरैरधुनानतपर्वभिः
पुरुषकेशरिणश्च पुरा नखैः ॥ १६२ ॥

राजा । अत्र खलु शतक्रतोरेव महिमा स्तुत्यः ।

सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
संभावनागुणमवेहि तमीश्वराणां ।
किं वाभविष्यदरुणस्तमसां विभेत्ता
तं चेत्सहस्रकिरणो धुरि नाकरिष्यत् ॥ १६३ ॥

मातलिः । सदृशमेवैतत् । स्तोकमन्तरमतीत्य । आयुष्मन् । इतः । पश्य नाकपृष्ठगतस्य सौभाग्यमात्मयशसः ।

विच्छित्तिशेषैः सुरसुन्दरीणां
वर्णैरमी कल्पलतांशुकेषु ।
संचिन्त्य गीतक्षममर्थबन्धं
दिवौकसस्त्वच्चरितं लिखन्ति ॥ १६४ ॥

राजा । मातले । असुरसंप्रहारोत्सुकेन पूर्वेद्युर्दिवमधिरोहता न लक्षितः स्वर्गमार्गः । कतरस्मिन्मरुतां पथि वर्तामहे ।

मातलिः ।

त्रिस्रोतसं वहति यो गगनप्रतिष्ठां
ज्योतींषि वर्तयति च प्रविभक्तरश्मिः ।
तस्य द्वितीयहरिविक्रमनिस्तमस्कं
वायोरिमं परिवहस्य वदन्ति मार्गं ॥ १६५ ॥

राजा । मातले । अतः खलु सबाह्यान्तःकरणो ममान्तरात्मा प्रसीदति । रथाङ्गमवलोक्य । मेघपदवीमवतीर्णौ स्वः ।

मातलिः । कथमवगम्यते ।

राजा ।

अयमरविवरेभ्यश्चातकैर्निष्पतद्भि
र्हरिभिरचिरभासां तेजसा चानुलिप्तैः ।
गतमुपरि घनानां वारिगर्भोदराणां
पिशुनयति रथस्ते शीकरक्लिन्ननेमिः ॥ १६६ ॥

मातलिः । क्षणादायुष्मान्स्वाधिकारभूमौ वर्तिष्यते ।

राजा । अधो ऽवलोक्य । वेगावतरणादाश्चर्यदर्शनः संलक्ष्यते मनुष्य लोकः । तथा हि

शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी
पर्णाभ्यन्तरलीनतां विजहति स्कन्धोदयात्पादपाः ।
संतानैस्तनुभावनष्टसलिला व्यक्तिं भजन्त्यापगाः
केनाप्युत्क्षिपतेव पश्य भुवनं मत्पार्श्वमानीयते ॥ १६७ ॥

मातलिः । साधु दृष्टं । सबहुमानं विलोक्य । अहो उदाररमणीया पृथिवी ।

राजा । मातले । कतमो ऽयं पूर्वापरसमुद्रावगाढः कनकरस निस्यन्दी सांध्य इव मेघपरिघः सानुमानालोक्यते ।

मातलिः । आयुष्मन् । एष खलु हेमकूटो नाम किंपुरुषपर्व तस्तपसां सिद्धिक्षेत्रं । पश्य ।

स्वायंभुवान्मरीचेर्यः प्रबभूव प्रजापतिः ।
सुरासुरगुरुः सो ऽत्र सपत्नीकस्तपस्यति ॥ १६८ ॥

राजा । तेन ह्यनतिक्रमणीयानि श्रेयांसि । प्रदक्षिणीकृत्य भग वन्तं गन्तुमिच्छामि ।

मातलिः । प्रथमः कल्पः ।

॥ नाट्येनावतीर्णौ ॥

राजा । सविस्मयं ।

उपोढशब्दा न रथाङ्गनेमयः
प्रवर्तमानं न च दृश्यते रजः ।
अभूतलस्पर्शतया निरुन्धत
स्तवावतीर्णो ऽपि रथो न लक्ष्यते ॥ १६९ ॥

मातलिः । एतावानेव शतक्रतोरायुष्मतश्च विशेषः ।

राजा । मातले । कतमस्मिन्प्रदेशे मारीचाश्रमः ।

मातलिः । हस्तेन दर्शयन् ।

वल्मीकाग्रनिमग्नमूर्तिरुरसा संदष्टसर्पत्वचा
कण्ठे जीर्णलताप्रतानवलये नात्यर्थसंपीडितः ।
अंसव्यापि शकुन्तनीडनिचितं बिभ्रज्जटामण्डलं
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थितः ॥ १७० ॥

राजा । नमस्ते कष्टतपसे ।

मातलिः । संयतप्रग्रहं रथं कृत्वा । महाराज । एतावदितिपरिवर्धितमन्दारवृक्षं प्रजापतेराश्रमं प्रविष्टौ स्वः ।

राजा । स्वर्गादधिकतरं निर्वृत्तिस्थानं । अमृतह्रदमिवावगाढो ऽस्मि ।

मातलिः । रथं स्थापयित्वा । अवतरत्वायुष्मान् ।

राजा । अवतीर्य । मातले । भवान्कथमिदानीं ।

मातलिः । संयन्त्रितो मया रथः । वयमप्यवतरामः । तथा कृत्वा । इत आयुष्मन् । परिक्रम्य । दृश्यन्तामत्रभवतामृषीणां तपोवनभूमयः ।

राजा । ननु विस्मयादवलोकयामि ।

प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने
तोये काञ्चनपद्मरेणुकपिशे धर्माभिषेकक्रिया ।
ध्यानं रत्नशिलातलेषु विबुधस्त्रीसंनिधौ संयमो
यत्काङ्क्षन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ॥ १७१ ॥

मातलिः । उत्सर्पिणी खलु महतां प्रार्थना । परिक्रम्य । आकाशे । अये वृद्धशाकल्य । किमनुतिष्ठति भगवान्मारीचः । किं ब्रवीषि । दाक्षायण्या पतिव्रताधर्ममधिकृत्य पृष्टस्तत्तस्यै महर्षिपत्नीसहितायै कथयतीति ।

राजा । कर्णं दत्वा । अये । प्रतिपाल्यावसरः खलु प्रस्तावः ।

मारीचः । राजानमवलोक्य । अस्मिन्नशोकवृक्षमूले तावदास्तामायुष्मान् । यावत्त्वामिन्द्रगुरवे निवेदयितुमन्तरान्वेषी भवामि ।

राजा । यथा भवान्मन्यते । इति स्थितः ।

मातलिः । आयुष्मन् । साधयाम्यहं । इति निष्क्रान्तः ।

राजा । निमित्तं सूचयित्वा ।

मनोरथाय नाशंसे किं बाहो स्पन्दसे वृथा ।
पूर्वावधीरितं श्रेयो दुःखं हि परिवर्तते ॥ १७२ ॥

नेपथ्ये । मा खु चावलं करेहि । कहं गदो एव्व अत्तणो पकिदिं ।

राजा । कर्णं दत्वा । अभूमिरियमविनयस्य । को नु खल्वेष निषिध्यते । शब्दानुसारेणावलोक्य । सविस्मितं । अये । को नु खल्वयमनुबध्यमानस्तपस्विनीभ्यामबालसत्त्वो बालः ।

अर्धपीतस्तनं मातुरामर्दक्लिष्टकेशरं ।
प्रक्रीडितुं सिंहशिशुं बलात्कारेण कर्षति ॥ १७३ ॥

॥ ततः प्रविशति यथानिर्दिष्टकर्मा तपस्विनीभ्यां बालः ॥

बालः । जिम्भ सिङ्घ । दन्ताइं दे गणइस्सं ।

प्रथमा । अविणीद । किं णो अपच्चणिव्विसेसाणि सत्ताणि विप्पअरेसि । हन्त वड्ढइ दे संरम्भो । ठाणेक्खु इसिजणेण सव्वदमणोत्ति किदणामहेओसि ।

राजा । किं नु खलु बाले ऽस्मिन्नौरस इव पुत्रे स्निह्यति मे मनः । नूनमनपत्यता मां वत्सलयति ।

द्वितीया । एसा खु केसरिणी तुमं लङ्घेदि । जइ से पुत्तअं ण मुञ्चेसि ।

बालः । सस्मितं । अम्हहे । बलिअंक्खु भीदोम्हि । इत्यधरं दर्शयति ।

राजा ।

महतस्तेजसो बीजं बालो ऽयं प्रतिभाति मे ।
स्फुलिङ्गावस्थया वह्निरेधापेक्ष इव स्थितः ॥ १७४ ॥

प्रथमा । वच्छ । एदं बालमिइन्दअं मुञ्च । अवरं दे कीलणअं दाइस्सं ।

बालः । कहिं । देहि णं । इति हस्तं प्रसारयति ।

राजा । कथं चक्रवर्तिलक्षणमप्यनेन धार्यते । तथा ह्यस्य

प्रलोभ्यवस्तुप्रणयप्रसारितो
विभाति जालग्रथिताङ्गुलिः करः ।
अलक्ष्यपत्रान्तरमिद्धरागया
नवोषसा भिन्नमिवैकपङ्कजं ॥ १७५ ॥

द्वितीया । सुव्वद । ण सक्को एसो वाआमेत्तेण विरमाविदुं । गच्छ तुमं । मम केरए उडए मक्कण्डेअस्स इसिकुमारअस्स वण्णचित्ति

दो मित्तिआमोरओ चिठ्ठदि । तं से उवहर ।

प्रथमा । तह । इति निष्क्रान्ता ।

बालः । इमिणा एव्व दाव कीलिस्सं । इति तापसीं विलोक्य हसति ।

राजा । स्पृहयामि खलु दुर्ललितायास्मै ।

आलक्ष्यदन्तमुकुलाननिमित्तहासै-
रव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।
अङ्काश्रयप्रणयिनस्तनयान्वहन्तो
धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥ १७६ ॥

तापसी । होदु । ण मं अअं गणेदि । पार्श्वमवलोकयति । को एत्थ इसिकुमाराणं । राजानमवलोक्य । भद्दमुह । एहि दाव । मोएहि इमिणा दुम्मोअहत्थग्गाहेण डिम्भलीलाए बाहीअमाणं बालमिइन्दअं ।

राजा । उपगम्य । सस्मितं । अयि भो महर्षिपुत्र ।

एवमाश्रमविरुद्धवृत्तिना
संयमः किमिति जन्मनस्त्वया ।
सत्त्वसंश्रयसुखो ऽपि दुष्यते
कृष्णसर्पशिशुनेव चन्दनं ॥ १७७ ॥

तापसी । भद्दमुह । ण क्खु अअं इसिकुमारओ ।

राजा । आकारसदृशं चेष्टितमेवास्य कथयति । स्थानप्रत्ययात्तु वयमेवंतर्किनः । यथाभ्यर्थितमनुतिष्ठन्बालस्पर्शमुपलभ्य । आत्मगतं ।

अनेन कस्यापि कुलाङ्कुरेण
स्पृष्टस्य गात्रेषु सुखं ममैवं ।
कां निर्वृतिं चेतसि तस्य कुर्या-
द्यस्यायमङ्गात्कृतिनः प्ररूढः ॥ १७८ ॥

तापसी । उभौ निर्वर्ण्य । अच्छरिअं अच्छरिअं ।

राजा । आर्ये । किमिव ।

तापसी । इमस्स बालअस्स दे वि संवादिणी आकिदित्ति विम्हाविदम्हि । अपरिइदस्सवि दे अप्पडिलोमो संवुत्तोत्ति ।

राजा । बालमुपलालयन् । न चेन्मुनिकुमारो ऽयं । अथ को ऽस्य व्यपदेशः ।

तापसी । पुरुवंसो ।

राजा । आत्मगतं । कथमेकान्वयो मम । अतः खलु मदनुकारिणमेनमत्रभवती मन्यते । अस्त्येतत्पौरवाणामन्त्यं कुलव्रतं ।

भवनेषु रसाधिकेषु पूर्वं
क्षितिरक्षार्थमुशन्ति ये निवासं ।
नियतैकयतिव्रतानि पश्चा
त्तरुमूलानि गृहीभवन्ति तेषां ॥ १७९ ॥

प्रकाशं । न पुनरात्मगत्या मानुषाणामेष विषयः ।

तापसी । जह भद्दमुहो भणादि । अच्छरासंबन्धेण इमस्स जणणी एत्थ देवगुरुणो तबोवणे पसूदा ।

राजा । अपवार्य । हन्त द्वितीयमिदमाशाजननं । प्रकाशं । अथ सा तत्रभवती किमाख्यस्य राजर्षेः पत्नी ।

तापसी । को तस्स धम्मदारपरिच्चाइणो णाम संकीत्तिदुं चिन्तिस्सदि ।

राजा । स्वगतं । इयं खलु कथा मामेव लक्षीकरोति । यदि तावदस्य शिशोर्नामत मातरं पृच्छामि । अथवा । तर्क्यनार्यः परदारव्यवहारः ।

प्रविश्य मृन्मयूरहस्ता

तापसी । सव्वदमण । सउन्दलावण्णं पेक्ख ।

बालः । सदृष्टिक्षेपं । कहिं वा मे अज्जू ।

उभे । णामसारिस्सेण वञ्चिदो माउवच्छलो ।

द्वितीया । वच्छ । इमस्स मित्तिआमोरअस्स रम्मत्तणं देक्खत्ति भणिदोसि ।

राजा । आत्मगतं । किं वा शकुन्तलेत्यस्य मातुराख्या । सन्ति पुनर्नामधेयसादृश्यानि । अपि नाम मृगतृष्णिकेव नाममात्रप्रस्तावो मे विषादाय कल्पते ।

बालः । अज्जुए । रोअदि मे एसो भद्दमोरओ । इति क्रीडनकमादत्ते ।

प्रथमा । विलोक्य । सोद्वेगं । अम्हहे । रक्खाकरण्डअं से मणिबन्धे ण दीसदि ।

राजा । अलमलमावेगेन । नन्विदमस्य सिंहशावविमर्दात्परिभ्रष्टं । इत्यादातुमिच्छति ।

उभे । मा खु मा खु । एदं अविलम्बिअ कहं गहिदं णेण । इति विस्मयादुरोनिहितहस्ते परस्परमवलोकयतः ।

राजा । किमर्थं प्रतिषिद्धाः स्मः ।

प्रथमा । सुणादु महाराओ । एसा अबराजिदा णाम ओसही इमस्स जादकम्मसमए भअवदा मारीएण दिण्णा । एदं किल मादापिदरो अप्पाणं च वज्जिअ अबरो भूमिपडिदं ण गेण्हादि ।

राजा । अथ गृह्णाति ।

प्रथमा । तदो तं सप्पो भविअ दंसइ ।

राजा । भवतीभ्यां कदाचिदस्याः प्रत्यक्षीकृता विक्रिया ।

उभे । अणेअसो ।

राजा । सहर्षं । आत्मगतं । कथमिव संपूर्णमपि मे मनोरथं नाभिनन्दामि । इति बालं परिष्वजते ।

द्वितीया । सुव्वदे । एहि । इमं वुत्तन्तं णिअमव्वावुडाए मउन्दलाए निवेदेम्ह । इति निष्क्रान्ते ।

बालः । मुञ्च मं । जाव अज्जूए सआसं गमिस्सं ।

राजा । पुत्रक । मया सहैव मातरमभिनन्दिष्यसि ।

बालः । ममक्खु तादो दुस्सन्दो । ण तुमं ।

राजा । सस्मितं । एष विवाद एव प्रत्याययति ।

॥ ततः प्रविशत्येकवेणीधरा शकुन्तला ॥

शकुन्तला । विआरकालेबि पकिदित्थं सव्वदमणस्स ओसहिं सुणिअ ण मे आसा आसि भाअहेएसु । अहवा । जह साणुमदीए आचक्खिदं । तह संभावीअदि एदं ।

राजा । शकुन्तलां विलोक्य । अये । सेयमत्रभवती शकुन्तला । यैषा

वसने परिधूसरे वसाना
नियमक्षाममुखी धृतैकवेणिः ।
अतिनिष्करुणस्य शुद्धशीला
मम दीर्घं विरहव्रतं बिभर्ति ॥ १८० ॥

शकुन्तला । पश्चात्तापविवर्णं राजानं दृष्ट्वा । णक्खु अज्जउत्तो विअ । तदो को एसो दाणिं किदरक्खामङ्गलं दारअं मे गत्तसंसग्गेण दूसेदि ।

बालः । मातरमुपेत्य । अज्जुए । को एसो पुरिसो मं पुत्तेत्ति आलिङ्गदि ।

राजा । प्रिये । क्रौर्यमपि मे त्वयि प्रयुक्तमनुकूलपरिणामं संवृत्तं । यदहमिदानीं त्वया प्रत्यभिज्ञातमात्मानं पश्यामि ।

शकुन्तला । आत्मगतं । हिअअ । समस्सस समस्सस । परिच्चत्तमच्छरेण अणुअम्पिदम्हि देव्वेण । अज्जउत्तोक्खु एसो ।

राजा । प्रिये ।

स्मृतिभिन्नमोहतमसो दिष्ट्या प्रमुखे स्थितासि मे सुमुखि ।
उपरागान्ते शशिनः समुपगता रोहिणी योगं ॥ १८१ ॥

शकुन्तला । जेदु जेदु अज्जउत्तो । इत्यर्धोक्ते वाष्पकण्ठी विरमति ।

राजा । सुन्दरि ।

वाष्पेण प्रतिषिद्धे ऽपि जयशब्दे जितं मया ।
यत्ते दृष्टमसंस्कारपाटलोष्ठपुटं मुखं ॥ १८२ ॥

बालः । अज्जुए । को एसो ।

शकुन्तला । वच्छ । दे भाअहेआइं पुच्छेहि ।

राजा । शकुन्तलायाः पादयोः प्रणिपत्य ।

सुतनु हृदयात्प्रत्यादेशव्यलीकमपैतु ते
किमपि मनसः संमोहो मे तदा बलवानभूत् ।
प्रबलतमसामेवंप्रायाः शुभेषु हि वृत्तयः
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया ॥ १८३ ॥

शकुन्तला । उट्ठेदु अज्जउत्तो । णूणं मे सुअरिअप्पडिबन्धअं पुराकिदं तेसु दिअहेसु परिणाममुहं आसि । जेण साणुक्कोसोवि अज्जउत्तो मइ विरसो संवुत्तो । राजोत्तिष्ठति । अह कहं अज्जउत्तेण सुमरिदो दुक्खभाई अअं जणो ।

राजा । उद्धृतविषादशल्यः कथयिष्यामि ।

मोहान्मया सुतनु पूर्वमुपेक्षितस्ते
यो वाष्पविन्दुरधरं परिबाधमानः ।
तं तावदाकुटिलपक्ष्मविलग्नमद्य
वाष्पं प्रमृज्य विगतानुशयो भवेयं ॥ १८४ ॥

इति यथोक्तमनुतिष्ठति ।

शकुन्तला । नाममुद्रां दृष्ट्वा । अज्जउत्त । एदं तं अङ्गुलीअअं ।

राजा । अस्मादङ्गुलीयोपलम्भात्खलु स्मृतिरुपलब्धा ।

शकुन्तला । विसमं किदं णेण । जं तदा अज्जउत्तस्स पच्चाअण काले दुल्लहं आसि ।

राजा । तेन ऋतुसमवायचिह्नं प्रतिपद्यतां लता कुसुमं ।

शकुन्तला । ण से विस्ससामि । अज्जउत्तो एव्व णं धारेदु ।

॥ ततः प्रविशति मातलिः ॥

मातलिः । दिष्ट्या । धर्मपत्नीसमागमेन पुत्रमुखदर्शनेन चायुष्मान्वर्धते ।

राजा । अभूत्संपादितस्वादुफलो मे मनोरथः । मातले । न खलु विदितो ऽयमाखण्डलेन वृत्तान्तः स्यात् ।

मातलिः । सस्मितं । किमीश्वराणां परोक्षं । एत्वायुष्मान् । भगवान्मारीचस्ते दर्शनं वितरति ।

राजा । शकुन्तले । अवलम्ब्यतां पुत्रः । त्वां पुरस्कृत्य भगवन्तं द्रष्टुमिच्छामि ।

शकुन्तला । हिरिआमि अज्जउत्तेण सह गुरुसमीवं गन्तुं ।

राजा । अप्याचरितव्यमभ्युदयकालेषु । एह्येहि ।

॥ सर्वे परिक्रामन्ति ।

॥ ततः प्रविशत्यदित्या सार्धमासनस्थो मारीचः ॥

मारीचः । राजानमवलोक्य । दाक्षायणि ।

पुत्रस्य ते रणशिरस्ययमग्रयायी
दुष्यन्त इत्यभिहितो भुवनस्य भर्ता ।
चापेन यस्य विनिवर्तितकर्म जातं
तत्कोटिमत्कुलिशमाभरणं मघोनः ॥ १८५ ॥

अदितिः । संभावणीआणुभावा से आकिदी ।

मातलिः । आयुष्मन् । एतौ पुत्रप्रीतिपिशुनेन चक्षुषा दिवौकसां पितरावायुष्मन्तमवलोकयतः । तावुपसर्प ।

राजा । मातले । एतौ

प्राहुर्द्वादशधास्थितस्य मुनयो यत्तेजसः कारणं
भर्तारं भुवनत्रयस्य सुषुवे यद्यज्ञभागेश्वरं ।
यस्मिन्नात्मभुवः परो ऽपि पुरुषश्चक्रे भवायास्पदं
द्वन्द्वं दक्षमरीचिसंभवमिदं तत्स्रष्टुरेकान्तरं ॥ १८६ ॥

मातलिः । अथ किं ।

राजा । प्रणिपत्य । उभाभ्यामपि वासवानुयोज्यो दुष्यन्तः प्रणमति ।

मारीचः । वत्स । चिरं जीव । पृथिवीं पालय ।

अदितिः । वच्छ । अप्पडिरहो होहि ।

शकुन्तला । दारअसहिदा वो पादवन्दणं करेमि ।

मारीचः । वत्से ।

आखण्डलसमो भर्ता जयन्तप्रतिमः सुतः ।
आशीरन्या न ते योग्या पौलोम्या सदृशो भव ॥ १८७ ॥

अदितिः । जादे । भत्तुणो अहिमदा होहि । अवस्सं दीहाऊ वच्छओ उहअकुलणन्दणो होदु । उबविसह ।

॥ सर्वे प्रजापतिमभित उपविशन्ति ॥

मारीचः । एकैकं निर्दिशन् ।

दिष्ट्या शकुन्तला साध्वी सदपत्यमिदं भवान् ।
श्रद्धा वित्तं विधिश्चेति त्रितयं तत्समागतं ॥ १८८ ॥

राजा । भगवन् । प्रागभिप्रेतसिद्धिः । पश्चाद्दर्शनं । अतो ऽपूर्वः खलु वो ऽनुग्रहः । कुतः ।

उदेति पूर्वं कुसुमं ततः फलं
घनोदयः प्राक्तदनन्तरं पयः ।
निमित्तनैमित्तिकयोरयं क्रम
स्तव प्रसादस्य पुरस्तु संपदः ॥ १८९ ॥

मातलिः । एवं विधातारः प्रसीदन्ति ।

राजा । भगवन् । इमामाज्ञाकरीं वो गान्धर्वेण विवाहविधिनोपयम्य कस्यचित्कालस्य बन्धुभिरानीतां स्मृतिशैथिल्यात्प्रत्यादिशन्नपराद्धो ऽस्मि तत्रभवतो युष्मत्सगोत्रस्य कण्वस्य । पश्चादङ्गुलीयकदर्शनादूढपूर्वां तद्दुहितरमवगतो ऽहं । तच्चित्रमिव मे प्रतिभाति ।

यथा गजो नेति समक्षरूपे
तस्मिन्नतिक्रामति संशयः स्यात् ।
पदानि दृष्ट्वा तु भवेत्प्रतीति
स्तथाविधो मे मनसो विकारः ॥ १९० ॥

मारीचः । वत्स । अलमात्मापचारशङ्कया । संमोहो ऽपि त

ह्यनुपपन्नः । श्रूयतां ।

राजा । अवहितो ऽस्मि ।

मारीचः । यदैवाप्सरस्तीर्थावतरणात्प्रत्यक्षवैक्लव्यां शकुन्तलामादाय मेनका दाक्षायणीमुपगता । तदैव ध्यानादवगतो ऽस्मि । दुर्वाससः शापादियं तपस्विनी सहधर्मचारिणी त्वया प्रत्यादिष्टा । नान्यथेति । स चायमङ्गुलीयकदर्शनावसानः ।

राजा । सोच्छ्वासं । एष वचनीयान्मुक्तो ऽस्मि ।

शकुन्तला । स्वगतं । दिट्ठिआ । अकारणपच्चादेसी ण अज्जउत्तो । ण क्खु सच्चं अत्ताणं सुमरेमि । अहवा । पत्तो मए स हि सावो विरहसुण्णहिअआए ण विदिदो । जदो सहीहिं संदिट्ठम्हि । भत्तुणो अङ्गुलीअअं दंसइदव्वंत्ति ।

मारीचः । वत्से । चरितार्थासि । सहधर्मचारिणं प्रति न त्वया मन्युः कार्यः । पश्य ।

शापादसि प्रतिहता स्मृतिरोधरूक्षे
भर्तर्यपेततमसि प्रभुता तवैव ।
छाया न मूर्छति मलोपहतप्रसादे
शुद्धे तु दर्पणतले सुलभावकाशा ॥ १११ ॥

राजा । भगवन् । अत्र खलु मे वंशप्रतिष्ठा । इति बालं हस्तेन गृह्णाति ।

मारीचः । तथाभाविनमेनं चक्रवर्तिनमवगच्छतु भवान् । पश्य ।

रथेनानुद्धातस्तिमितगतिना तीर्णजलधिः
पुरा सप्तद्वीपां जयति वसुधामप्रतिरथः ।

इहायं सत्वानां प्रसभदमनात्सर्वदमनः
पुनर्यास्यत्याख्यां भरत इति लोकस्य भरणात् ॥ ११२ ॥

राजा । भगवता कृतसंस्कारे सर्वमस्मिन्वयमाशास्महे ।

अदितिः । भग्रवं । इमाए दुहिदुमणोरहसंपत्तीए कण्णोवि दाव सुदवित्थारो करीअदु । दुहिदुवच्छला मेणआ इह एव्व उबचरन्ती चिठ्ठइ ।

शकुन्तला । आत्मगतं । मणोरहोक्खु भणिदो भग्रवदीए ।

मारीचः । तपःप्रभावात्प्रत्यक्षं सर्वमेव तत्रभवतः ।

राजा । अतः खलु ममानतिक्रुद्धो मुनिः ।

मारीचः । तथाप्यसौ प्रियमस्माभिः प्रष्टव्यः । कः को ऽत्र भोः ।

प्रविश्य

शिष्यः । भगवन् । अयमस्मि ।

मारीचः । गालव । इदानीमेव विहायसा गत्वा मम वचनात्तत्रभवते कण्वाय प्रियमावेदय । यथा । पुत्रवती शकुन्तला तच्छापनिवृत्तौ स्मृतिमता दुष्यन्तेन प्रतिगृहीतेति ।

शिष्यः । यदाज्ञापयति भगवान् । इति निष्क्रान्तः ।

मारीचः । वत्स । त्वमपि स्वापत्यदारसहितः सख्युराखण्डलस्य रथमारुह्य ते राजधानीं प्रतिष्ठस्व ।

राजा । यदाज्ञापयति भगवान् ।

मारीचः । अपि च ।

तव भवतु विडौजाः प्राज्यवृष्टिः प्रजासु
त्वमपि विततयज्ञः स्वर्गिणः प्रीणयालं ।

युगशतपरिवर्तानेवमन्योन्यकृत्यै
नयतमुभयलोकानुग्रहश्लाघनीयैः ॥ १९३ ॥

राजा । भगवन् । यथाशक्ति श्रेयसे यतिष्ये ।

मारीचः । वत्स । किं ते भूयः प्रियमुपहरामि ।

राजा । अतः परमपि प्रियमस्ति । यदिह भगवान्प्रियं कर्तुमिच्छति । तर्हीदमस्तु भरतवाक्यं ।

प्रवर्ततां प्रकृतिहिताय पार्थिवः
सरस्वती श्रुतिमहतां महीयतां ।
ममापि च क्षपयतु नीललोहितः
पुनर्भवं परिगतशक्तिरात्मभूः ॥ १९४ ॥

॥ इति निष्क्रान्ताः सर्वे ॥

॥ सप्तमो ऽङ्कः ॥

॥ समाप्तमिदमभिज्ञानशकुन्तलं नाम नाटकं ॥

॥ शुभं भूयात् ॥

॥ पत्रं ३ ॥

नटी । आर्य । इयमस्मि । आज्ञापयत्वार्यः । को नियोगो ऽनुष्ठीयतामिति ।

नटी । सुविहितप्रयोगतयार्यस्य न किमपि परिहास्यते ।

॥ पत्रं ४ ॥

नटी । एवं न्वेतत् । अनन्तरकरणीयं तावदार्य आज्ञापयतु ।

नटी । कतमं पुनर्ऋतुमधिकृत्य गास्यामि ।

नटी । तथा ।

ईषदीषच्चुम्बितानि भ्रमरैः सुकुमारकेशरशिखानि ।
अवतंसयन्ति दयमानाः प्रमदाः शिरीषकुसुमानि ॥

नटी । नन्वार्यमिश्रैः प्रथममेवाज्ञापितं । अभिज्ञानशकुन्तलं नामापूर्वं नाटकं प्रयोगेनाधिक्रियतामिति ।

॥ पत्रं ८ ॥

नेपथ्ये । इत इतः सख्यौ ।

॥ पत्रं ९ ॥

शकुन्तला । इत इतः सख्यो ।

अनसूया । हला शकुन्तले । त्वत्तो ऽपि तातकाश्यपस्याश्रमवृक्षाः प्रियतरा इति तर्कयामि । येन नवमालिकाकुसुमपेलवापि त्वमेतेषामालवालपूरणे नियुक्ता ।

शकुन्तला । न केवलं तातनियोग एव । अस्ति मे सोदरस्नेहो ऽप्येतेषु ।

शकुन्तला । सखि अनसूये । अतिपिनद्धेन वल्कलेन प्रियंवदया नियन्त्रितास्मि । शिथिलय तावदेनं ।

अनसूया । तथा ।

प्रियंवदा । अत्र पयोधरविस्तारयितृआत्मनो यौवनमुपालभस्व । मां किमुपालभसे ।

॥ पत्रं १० ॥

शकुन्तला । एष वातेरितपल्लवांगुलीभिस्त्वरयतीव मां केशरवृक्षः । यावदेनं संभावयामि ।

प्रियंवदा । हला शकुन्तले । अत्रैव तावन्मुहूर्तं तिष्ठ । यावत्त्वयोपगतया लतासनाथ इवायं केशर वृत्तः प्रतिभाति ।

शकुन्तला । अतः खलु प्रियंवदासि त्वं ।

अनसूया । हला शकुन्तले । इयं स्वयंवरवधूः सहकारस्य त्वया कृतनामधेया वनज्योत्स्नेति नवमा लिका । एनां विस्मृतासि ।

शकुन्तला । तदात्मानमपि विस्मरिष्यामि ।

॥ पत्रं ११ ॥

हला । रमणीये खलु काले ऽस्य लतापादपमिथुनस्य व्यतिकरः संवृत्तः । नवकुसुमयौवना वनज्योत्स्ना । बद्धपल्लवतयोपभोगक्षमः सहकारः ।

प्रियंवदा । अनसूये । जानासि । किं शकुन्तला वनज्योत्स्नामतिमात्रं प्रेक्षत इति ।

अनसूया । न खलु विभावयामि । कथय ।

प्रियंवदा । यथा वनज्योत्स्नानुरूपेण पादपेन संगता । अपि नामैवमहमप्यात्मनो ऽनुरूपं वरं लभेयेति ।

शकुन्तला । एष नूनं तवात्मगतो मनोरथः ।

शकुन्तला । अहो सलिलसेकसंभ्रमोद्गतो नवमालिकामुज्झित्वा वदनं मे मधुकरो ऽभिवर्तते ।

॥ पत्रं १२ ॥

शकुन्तला । न एष धृष्ट विरमति । अन्यतो गमिष्यामि । कथमितो ऽप्यागच्छति । हला । परित्रायध्वं परित्रायध्वं मामनेन दुर्विनीतेन दुष्टमधुकरेणाभिभूयमानां ।

उभे । के आवां परित्रातुं । दुष्यन्तमाक्रन्द । राजरक्षितव्यानि तपोवनानि नाम ।

शकुन्तला । कथमितो ऽपि मामनुसरति ।

अनसूया । आर्य । न खलु किमप्यत्याहितं । इयं नौ प्रियसखी मधुकरेणाभिभूयमाना कातरीभूता ।

अनसूया । इदानीमतिथिविशेषलाभेन । हला शकुन्तले । गच्छोटजं । फलमिश्रमर्घमुपहर । इदं पादोदकं भविष्यति ।

॥ पत्रं १३ ॥

प्रियंवदा । तेन ह्यस्यां प्रच्छायशीतलायां सप्तपर्णवेदिकायां मुहूर्तमुपविश्य परिश्रमविनोदं करोत्वार्यः ।

अनसूया । हला शकुन्तले । उचितं नः पर्युपासनमतिथीनां । अत्रोपविशामः ।

शकुन्तला । किं नु खल्विमं प्रेक्ष्य तपोवनविरोधिनो विकारस्य गमनीयास्मि संवृत्ता ।

प्रियंवदा । अनसूये । को नु खल्वेषः । चतुरगम्भीराकृतिर्मधुरं प्रियमालपन्प्रभाववानिव लक्ष्यते ।

अनसूया । सखि । ममाप्यस्ति कौतूहलं । पृच्छामि तावदेनं । आर्यस्य मधुरालापजनितो विश्वासो मां मन्त्रयति । कतम आर्येण राजर्षिवंशो ऽलंक्रियते । कतमो वा विरहपर्युत्सुकजनः कृतो देशः । किं निमित्तं वा सुकुमारतरो ऽपि तपोवनपरिश्रमस्यात्मा पदमुपनीतः ।

शकुन्तला । हृदय । मोत्ताम्य । एषा त्वया चिन्तितान्यनसूया मन्त्रयते ।

॥ पत्रं १४ ॥

अनसूया । सनाथा इदानीं धर्मचारिणः ।

सख्यौ । हला शकुन्तले । यद्यत्राद्य तातः संनिहितो भवेत् ।

शकुन्तला । ततः किं भवेत् ।

सख्यौ । इमं जीवितसर्वस्वेनाप्यतिथिविशेषं कृतार्थं करिष्यति ।

शकुन्तला । युवामपेतं । किमपि हृदये कृत्वा मन्त्रयध्वं । न वां वचनं श्रोष्यामि ।

सख्यौ । आर्य । अनुग्रह इवेयमभ्यर्थना ।

अनसूया । शृणोत्वार्यः । अस्ति को ऽपि कौशिक इति गोत्रनामधेयो महाप्रभावो राजर्षिः ।

अनसूया । तं नौ प्रियसख्याः प्रभवमवगच्छ । उज्झितायाः शरीरसंवर्धनादिभिस्तातकाश्यपो ऽस्याः पिता ।

अनसूया । शृणोत्वार्यः । गौतमीतीरे पुरा किल तस्य राजर्षेरुग्रे तपसि वर्तमानस्य किमपि जातशङ्कैर्देवैर्मेनका नामाप्सराः प्रेषिता नियमविघ्नकारिणी ।

॥ पत्रं १५ ॥

अनसूया । ततो वसन्तावतारसमये ऽस्या उन्मादयितृ रूपं प्रेक्ष्य ।

अनसूया । अथ किं ।

प्रियंवदा । पुनरपि वक्तुकाम इवार्यः ।

प्रियंवदा । अलं विचार्य । अनियन्त्रणानुयोगस्तपस्विजनो नाम ।

॥ पत्रं १६ ॥

प्रियंवदा । आर्य । धर्मचरणे ऽपि परवशो ऽयं जनः । गुरोः पुनरस्या अनुरूपवरप्रदाने संकल्पः ।

शकुन्तला । अनसूये । अहं गमिष्यामि ।

अनसूया । किं निमित्तं ।

शकुन्तला । इमामसंबद्धप्रलापिणीं प्रियंवदामार्यायै गौतम्यै निवेदयिष्यामि ।

अनसूया । सखि । न युक्तं ते ऽकृतसत्कारमतिथिविशेषं विसृज्य स्वच्छन्दतो गमनं ।

प्रियंवदा । हला । न ते युक्तं गन्तुं ।

शकुन्तला । किं निमित्तं ।

प्रियंवदा । वृक्षसेचने द्वे धारयसि मे । एहि तावत् । आत्मानं मोचयित्वा ततो गमिष्यसि ।

॥ पत्रं १७ ॥

प्रियंवदा । तेन हि नार्हत्येतदंगुलीयकमंगुलीवियोगं । आर्यस्य वचनेनानृणेदानीमेषा । हला शकुन्तले । मोचितास्यनुकम्पिनार्येणाथवा महाराजेन । गच्छेदानीं ।

शकुन्तला । यद्यात्मनः प्रभविष्यामि । का त्वं विसर्जितव्यस्य रोद्धव्यस्य वा ।

॥ पत्रं १८ ॥

सख्यौ । आर्य । अनेनारण्यकवृत्तान्तेन पर्याकुलाः स्मः । अनुजानीहि न उटजगमनाय ।

सख्यौ । आर्य । असंभावितातिथिसत्कारो भूयो ऽपि प्रेक्षणनिमित्तं । लज्जामह आर्यं विज्ञापयितुं ।

शकुन्तला । अनसूये । अभिनवकुशसूच्या परिक्षतं मे चरणं । कुरवकशाखापरिलग्नं च वल्कलं । तावत्परिपालयतं मां । यावदेनन्मोचयामि ।

॥ पत्रं २० ॥

विदूषकः । भो दिष्टं । एतस्य मृगयाशीलस्य राज्ञो वयस्यभावेन निर्विण्णो ऽस्मि । अयं मृगः । अयं वराहः । अयं शार्दूल इति मध्याह्ने ऽपि ग्रीष्मविरलपादपच्छायासु वनराजिष्वाहिण्डयत अटव्या अटवीं । पत्रसंकरकषायाणि कटूणि गिरिनदीजलानि पीयन्ते । अनियतवेलं शूल्यमांसभूयिष्ठ आहारो ऽश्यते । तुरगानुधावनकण्डितसंधे रात्रावपि निकामं शयितव्यं नास्ति । ततो महत्येव प्रत्यूषे दास्याःपुत्रैः शकुनिलुब्धकैर्वनग्रहणकोलाहलेन प्रतिबोधितो ऽस्मि । इयतेदानीमपि पीडा न निष्क्रामति । ततो गण्डस्योपरि पिटका संवृत्ता । ह्यः किलास्मास्ववहीनेषु तत्रभवतो मृगानुसारेणाश्रमपदं प्रविष्टस्य तापसकन्यका शकुन्तला नाम ममाधन्यतायै दर्शिता । सांप्रतं नगरगमनाय मनः कथमपि न करोति । अद्यापि तस्य तामेव चिन्तयतो ऽक्ष्णोः प्रभातमासीत् । का गतिः । यावदेनं कृताचारपरिक्रमं पश्यामि । एष बाणासनहस्ताभिर्यवनीभिर्वनपुष्पमालाधारिणीभिः परिवृत इत एवागच्छति प्रियवयस्यः । भवतु । अङ्गभङ्गविकल इव भूत्वा स्थास्यामि ।

॥ पत्रं २१ ॥

यद्येवमपि नाम विश्रमं लभेय ।

विदूषकः । भो वयस्य । न मे हस्तपादाः प्रसरन्ति । तद्वाचामात्रेण जीवयिष्यामि ।

विदूषकः । कुतः किल स्वयमक्षिणी आकुलीकृत्याश्रुकारणं पृच्छसि ।

विदूषकः । भो वयस्य । यद्वेतसः कुब्जलीलां विडम्बयति । तत्किमात्मनः प्रभावेन । ननु नदीवेगस्य ।

विदूषकः । ममापि भवान् ।

विदूषकः । एवं राजकार्याण्युज्झित्वैतादृश आकुलप्रदेशे वन

॥ पत्रं २२ ॥

चरवृत्तिना त्वया भवितव्यं । यत्सत्यं प्रत्यहं श्वापदसमुत्सारणैः संक्षोभितसंधिबन्धानां मम गात्राणामनीशो ऽस्मि संवृत्तः । तत्प्रसादयिष्ये विसर्ष्टुं मामेकाहमपि तावद्विश्रमितुं ।

विदूषकः । अत्रभवान्किमपि हृदये कृत्वा मन्त्रयते । अरण्ये मया रुदितमासीत् ।

विदूषकः । चिरं जीव ।

विदूषकः । आज्ञापयतु भवान् ।

विदूषकः । किं मोदकखण्डिकायां । तेन हि सुगृहीतो ऽयं जनः ।

दौवारिकः । आज्ञापयतु भर्ता ।

॥ पत्रं २३ ।

दौवारिकः । तथा । एष आज्ञावचनोत्कण्ठ इतो दत्तदृष्टिरेव भर्ता तिष्ठति । उपसर्पत्वार्यः ।

विदूषकः । अत्रभवान्प्रकृतिमापन्नः । त्वं तावदटव्या अटवीमाहिण्डन्नरनासिकालोलुपस्य जीर्णऋक्षस्य कस्यापि मुखे पतिष्यसि ।

॥ पत्रं २४ ॥

विदूषकः । ध्वंसितस्त उत्साहवृत्तान्तः ।

परिजनः । यद्देव आज्ञापयति ।

विदूषकः । कृतं भवतेदानीं निर्मक्षिकं । सांप्रतमेतस्यां पादपच्छायायां विरचितलतावितानदर्शनीयायामासने निषीदतु भवान् । यावदहमपि सुखासीनो भवामि ।

विदूषकः । एतु भवान् ।

॥ पत्रं २५ ॥

विदूषकः । ननु भवानग्रतो मे वर्तते ।

विदूषकः । भवतु । अस्या अवसरं न दास्यामि । भो वयस्य । ते तापसकन्यकाभ्यर्थनीया दृश्यते ।

विदूषकः । यथा कस्यापि पिण्डखर्जूरैरुद्वेजितस्य तिन्तिड्यामभिलाषो भवेत् । तथा स्त्रीरत्नपरिभाविनो भवत इयमभ्यर्थना ।

विदूषकः । तत्खलु रमणीयं । यद्भवतो ऽपि विस्मयमुत्पादयति ।

विदूषकः । यद्येवं । प्रत्यादेश इदानीं रूपवतीनां ।

॥ पत्रं २६ ॥

विदूषकः । तेन हि लघु परित्रायतामेनां भवान् । मा कस्यापि तपस्विन इंगुदीतैलमिश्रचिक्कणशीर्षस्य हस्ते पतिष्यति ।

विदूषकः । अत्रभवन्तमन्तरेण कीदृशो ऽस्या दृष्टिरागः ।

विदूषकः । ननु खलु दृष्टमात्रस्य तवाङ्कमारोहति ।

विदूषकः । तेन हि गृहीतपाथेयो भव । कृतं त्वयोपवनं तपोवनमिति प्रेक्षे ।

॥ पत्रं २७ ॥

विदूषकः । को ऽपरो ऽपदेशः । त्वं राजा ननु । नीवारषष्ठभागमस्माकमुपहरन्त्विति ।

दौवारिकः । जयतु जयतु भर्ता । एतौ द्वावृषिकुमारकौ प्रतिहारभूमिमुपस्थितौ ।

दौवारिकः । एष प्रवेशयामि । इत इतो भवन्तौ ।

॥ पत्रं २८ ॥

विदूषकः । एषेदानीमनुकूला ते ऽभ्यर्थना ।

दौवारिकः । यद्देव आज्ञापयति ।

॥ पत्रं २९ ॥

विदूषकः । प्रथमं सपरिवाहमासीत् । इदानीं राक्षसवृत्तान्तेन विन्दुरपि नावशेषितः ।

विदूषकः । एष राक्षसाद्रक्षितो ऽस्मि ।

दौवारिकः । सज्जो रथो भर्तुर्विजयप्रस्थानं प्रेक्षते । एष पुनर्नगराद्देवीनामाज्ञप्तिहरः करभक आगतः ।

दौवारिकः । अथ किं ।

दौवारिकः । तथा । एष भर्ता । उपसर्प ।

करभकः । जयतु जयतु भर्ता । देव्याज्ञापयति । आगामिनि चतुर्थदिवसे प्रवृत्तपारणो मे उपवासो भविष्यति । तत्र दीर्घायुषावश्यं संभावितव्येति ।

विदूषकः । त्रिशंकुरिवान्तराले तिष्ठ ।

॥ पत्रं ३० ॥

विदूषकः । ननु खलु मां रक्षोभीरुकं गणयसि ।

विदूषकः । यथा राजानुज्ञेन गन्तव्यं । तथा गच्छामि ।

विदूषकः । तेन हि युवराजो ऽस्मीदानीं संवृत्तः ।

विदूषकः । अथ किं ।

॥ पत्रं ३३ ॥

सख्यौ । हला शकुन्तले । अपि सुखयति ते नलिनीपत्रवातः ।

शकुन्तला । किं वीजयतो मां सख्यौ ।

प्रियंवदा । अनसूये । तस्य राजर्षेः प्रथमदर्शनादारभ्य पर्युत्सुकेव शकुन्तला । किं नु खल्वस्यास्तन्निमित्तो ऽयमातङ्को भवेत् ।

अनसूया । सखि । ममापीदृशाशङ्का हृदयस्य । भवतु । प्रक्ष्यामि तावदेनां । सखि । प्रष्टव्यासि किमपि । बलवान्खलु ते संतापः ।

॥ पत्रं ३४ ॥

शकुन्तला । हला । किं वक्तुकामासि ।

अनसूया । हला शकुन्तले । अनभ्यन्तरे खल्वावां मदनगतस्य वृत्तान्तस्य । किंतु । यादृशीतिहासनिबन्धेषु कामयमानामवस्था श्रूयते । तादृशीं ते प्रेक्षे । कथय । किंनिमित्तं ते संतापो । विकारं खलु परमार्थतो ऽज्ञात्वानारम्भः प्रतिकारस्य ।

शकुन्तला । बलवान्खलु मे ऽभिनिवेश इदानीमपि । सहसैतयोर्न शक्नोमि निवेदितुं ।

प्रियंवदा । सखि शकुन्तले । सुष्ठ्वेषा भणाति । किमात्मन आतङ्कमुपेक्षसे । अनुदिवसं खलु परिहीयसे अङ्गैः । केवलं लावण्यमयी छाया त्वां न मुञ्चति ।

शकुन्तला । सखि । कस्य वान्यस्य कथयिष्यामि । आयासयित्रीदानीं वां भविष्यामि ।

उभे । अत एव खलु निर्बन्धः । स्निग्धजनसंविभक्तं हि दुःखं सह्यवेदनं भवति ।

॥ पत्रं ३५ ॥

शकुन्तला । सखि । यतः प्रभृति मम दर्शनपथमागतः स तपोवनरक्षिता राजर्षिः । तत आरभ्य तद्गतेनाभिलाषेणैतदवस्थास्मि संवृत्ता ।

शकुन्तला । तद्यदि वामनुमतं । तथा वर्तेथां । यथा तस्य राजर्षेरनुकम्पनीया भवामि । अन्यथा वश्यं सिञ्चतं मे तिलोदकं ।

प्रियंवदा । अनसूये । दूरगतमन्मथाक्षमेयं कालहरणस्य । यस्मिन्बद्धभावैषा । स ललामभूतः पौरवाणां । तद्युक्तमस्या अभिलाषो ऽभिनन्दितुं ।

अनसूया । तथा । यथा भणासि ।

प्रियंवदा । सखि । दिष्ट्या । अनुरूपो ऽस्या अभिनिवेशः । सागरं वर्जयित्वा कुत्र वा महानद्यवतरति । क इदानीं सहकारमन्तरेणातिमुक्तलतां पल्लवितां सहते ।

अनसूया । कः पुनरुपायो भवेत् । येनाविलम्बितं निभृतं च सख्या मनोरथं संपादयावः ।

॥ पत्रं ३६ ॥

प्रियंवदा । निभृतमिति चिन्तनीयं भवेत् । शीघ्रमिति सुकरं ।

अनसूया । कथमिव ।

प्रियंवदा । ननु स राजर्षिरस्यां स्निग्धदृष्ट्यां सूचिताभिलाषः ' इमानि दिवसानि प्रजागरकृशो लक्ष्यते ।

प्रियंवदा । हला । मदनलेखो ऽस्य क्रियतां । इमं देवशेषापदेशेन सुमनोगोपितं कृत्वास्य हस्तं प्रापयिष्यामि ।

अनसूया । रोचते मे सुकुमारः प्रयोगः । किं वा शकुन्तला भणाति ।

शकुन्तला । को नियोगो विकल्प्यते ।

प्रियंवदा । तेन ह्यात्मन उपन्यासपूर्वं चिन्तय तावत्किमपि ललितपदबन्धनं ।

शकुन्तला । हला । चिन्तयाम्यहं । अवधीरणाभीरुकं पुनर्वेपते मे हृदयं ।

॥ पत्रं ३७ ॥

सख्यौ । आत्मगुणावमानिनि । क इदानीं शरीरनिर्वापयित्रीं शारदीं ज्योत्स्नां पटान्तेन वारयति ।

शकुन्तला । नियोजितेदानीमस्मि ।

शकुन्तला । हला । चिन्तितं मया गीतवस्तु । न तु संनिहितानि पुनर्लेखनसाधनानि ।

प्रियंवदा । अस्मिन्शुकोदरसुकुमारे नलिनीपत्रे नखैर्निक्षिप्तवर्णं कुरु ।

शकुन्तला । हला । शृणुतमिदानीं संगतार्थं न वेति ।

उभे । अवहिते स्वः ।

शकुन्तला । तव न जाने हृदयं मम पुनः कामो दिवापि रात्रिमपि ।
निर्घृण तपति बलवत्त्वयि वृत्तमणोरथान्यङ्गानि ॥

सख्यौ । स्वागतमविलम्बिनो मनोरथस्य ।

॥ पत्रं ३८ ॥

अनसूया । इतः शिलातलैकदेशमलंकरोतु वयस्यः ।

प्रियंवदा । द्वयोरपि युवयोरन्योन्यानुरागः प्रत्यक्षः । सखीस्नेहो मां पुनरुक्तवादिनीं करोति ।

प्रियंवदा । आपन्नस्य विषयवासिन आर्तिहरेण राज्ञा भवितव्यमित्येष वो धर्मः ।

प्रियंवदा । तेन हीयमावयोः प्रियसखी त्वामुद्दिश्येदमवस्थान्तरं भगवता मदनेनारोपिता । तदर्हस्याभ्युपपत्त्या जीवितमस्या अवलम्बितुं ।

शकुन्तला । हला । किमन्तःपुरविरहपर्युत्सुकस्य राजर्षेरुपरोधेन ।

अनसूया । वयस्य । बहुवल्लभा राजानः श्रूयन्ते । यथा

॥ पत्रं ३९ ॥

नौ प्रियसखी बन्धुजनशोचनीया न भवति । तथा निर्वाहय ।

उभे । निर्वृते स्वः ।

प्रियंवदा । अनसूये । यथैष इतो दत्तदृष्टिरुत्सुको मृगपोतको मातरमन्विष्यति । एहि । संयोजयाव एनं ।

शकुन्तला । हला । अशरणास्मि । अन्यतरा युवयोरागच्छतु ।

उभे । पृथिव्या यो शरणं । स तव समीपे वर्तते ।

शकुन्तला । कथं गते एव ।

शकुन्तला । न माननीयेष्वात्मानमपराधयिष्यामि ।

॥ पत्रं ४० ॥

शकुन्तला । पौरव । रक्ष विनयं । मदनसंतप्तापि न खल्वात्मनः प्रभवामि ।

शकुन्तला । मुञ्च तावन्मां । भूयो ऽपि सखीजनमनुमानयिष्यामि ।

शकुन्तला । कदा ।

नेपथ्ये । चक्रवाकबध्वायामन्त्रयस्व । सहचरमुपस्थिता रजनी ।

शकुन्तला । पौरव । असंशयं मम शरीरवृत्तान्तोपलम्भायार्या गौतमीत एवागच्छति । तावद्विटपान्तरितो भव ।

सख्यौ । इत इत आर्या गौतमी ।

॥ पत्रं ४१ ॥

गौतमी । जाते । अपि लघुसंतापानि ते ऽङ्गानि ।

शकुन्तला । अस्ति मे विशेषः ।

गौतमी । अनेन दर्भोदकेन निराबाधमेव ते शरीरं भविष्यति । वत्से । परिणतो दिवसः । एहि । उटजमेव गच्छामः ।

शकुन्तला । हृदय । प्रथममेव सुखोपनते मनोरथे कातरभावं न मुञ्चसि । सानुशयविघटितस्य कथं ते सांप्रतं संतापः । लतावलय संतापहारक । आमन्त्रये त्वां भूयो ऽपि परिभोगाय ।

॥ पत्रं ४३ ॥

अनसूया । हला प्रियंवदे । यद्यपि गान्धर्वेण विवाहविधिना निर्वृत्तकल्याणा शकुन्तलानुरूपभर्तृगामिनी संवृत्तेति निर्वृतं मे हृदयं । तथापीयच्चिन्तनीयं ।

प्रियंवदा । कथमिव ।

अनसूया । अद्य स राजर्षिरिष्टिं परिसमाप्यर्षिभिर्विसर्जित आत्मनो नगरं प्रविश्यान्तःपुरसमागत इतोगतं वृत्तान्तं स्मरति वा न वेति ।

प्रियंवदा । विश्रब्धा भव । न तादृशा आकृतिविशेषा गुणविरोधिनो भवन्ति । तात इदानीमिदं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यत इति ।

अनसूया । यथाहं पश्यामि । तथा तस्यानुमतं भवेत् ।

प्रियंवदा । कथमिव ।

अनसूया । गुणवते कन्या प्रतिपादनीयेत्ययं तावत्प्रथमः संकल्पः । तं यदि दैवमेव संपादयति । नन्वल्पायासेन कृतार्थो गुरुजनः ।

॥ पत्रं ४४ ॥

प्रियंवदा । सखि । अवचितानि वलिकर्मपर्याप्तानि कुसुमानि ।

अनसूया । ननु प्रियसख्याः शकुन्तलायाः सौभाग्यदेवतार्चनीया ।

प्रियंवदा । युज्यते ।

अनसूया । सखि । अतिथीनामिव निवेदितं ।

प्रियंवदा । ननूटजसंनिहिता शकुन्तला । अद्य पुनर्हृदयेनासंनिहिता ।

अनसूया । भवतु । अलमियद्भिः कुसुमैः ।

प्रियंवदा । हा धिक् । हा धिक् । अप्रियमेव संवृत्तं । कस्मिन्नपि पूजार्हे ऽपराद्धा शून्यहृदया शकुन्तला । न खलु यस्मिन्कस्मिन्नपि । एष दुर्वासाः सुलभकोपो महर्षिः । तथा शप्त्वा वेगचलोत्फुरदुर्वारगत्या प्रतिनिवृत्तः । को ऽन्यो हुतवहाद्दग्धुं प्रभविष्यति ।

अनसूया । गच्छ । पादयोः प्रणम्य निवर्तयैनं । यावदहमर्घोदकमुपकल्पयामि ।

॥ पत्रं ४५ ॥

प्रियंवदा । तथा ।

अनसूया । अहो । आवेगस्खलितया गत्या प्रभ्रष्टं मे हस्तात्पुष्पभाजनं ।

प्रियंवदा । सखि । प्रकृतिवक्रः स कस्यानुनयं प्रतिगृह्णाति । किमपि पुनः सानुक्रोशः कृतः ।

अनसूया । तस्मिन्बह्वेतदपि । कथय ।

प्रियंवदा । यदा निवर्तितुं नेच्छति । तदा विज्ञापितो मया । भगवन् । प्रथममिति प्रेक्ष्याविज्ञाततपःप्रभावस्य दुहितृजनस्य भगवतैको ऽपराधो मर्षयितव्य इति ।

अनसूया । ततस्ततः ।

प्रियंवदा । ततः । मे वचनमन्यथाभवितुं नार्हति । किंत्वभिज्ञानाभरणदर्शनेन शापो निवर्तिष्यत इति मन्त्रयमाणः स्वयमन्तर्हितः ।

अनसूया । शक्यमिदानीमाश्वसितुमस्ति । तेन राजर्षिणा संप्रस्थितेन स्वनामधेयाङ्कितमंगुलीयकं स्मरणीयमिति स्वयं पिनद्धं । तस्मिन्स्वाधीनोपाया शकुन्तला भविष्यति ।

प्रियंवदा । सखि । एहि । देवकार्यं तावन्निर्वर्तयावः ।

प्रियंवदा । अनसूये । प्रेक्षस्व तावत् । वामहस्तोपहितवदनालिखितेव प्रियसखी भर्तृगतया चिन्तयात्मानमपि नैषा विभावयति । किं पुनरागन्तुकं ।

अनसूया । प्रियंवदे । द्वयोरेव नौ मुखे एष वृत्तान्तस्

॥ पत्रं ४६ ॥

तिष्ठतु । रक्षितव्या खलु प्रकृतिपेलवा प्रियसखी ।

प्रियंवदा । क इदानीमुष्णोदकेन नवमालिकां सिञ्चति ।

॥ पत्रं ४७ ॥

अनसूया । यद्यपि नाम विषयपराङ्मुखस्यापि जनस्यैतन्न विदितं । तथापि तेन राज्ञा शकुन्तलाया मनार्यमाचरितं ।

अनसूया । प्रतिबुद्धापि किं करिष्यामि । न म उचितेष्वपि निजकरणीयेषु हस्तपादाः प्रसरन्ति । काम इदानीं सकामो भवतु । येनासत्यसंधे जने शून्यहृदया सखी पदं कारिता । अथवा । दुर्वासःशाप एव विकारयति । अन्यथा कथं स राजर्षिस्तादृशानि मन्त्रयित्वेयतः कालस्य लेखमात्रमपि न विसर्जयति । तदितो ऽभिज्ञानमंगुलीयकमस्य विसर्जयावः । दुःखशीले तपस्विजने को ऽभ्यर्थ्यतां । ननु सखीगामी दोष इति व्यवसितापि न पारयामि प्रवासप्रतिनिवृत्तस्य तातकाश्यपस्य दुष्यन्तपरिणीतामापन्नसत्त्वां शकुन्तलां निवेदयितुं । इत्थंगते ऽस्माभिः किं करणीयं ।

प्रियंवदा । सखि । त्वरय त्वरय शकुन्तलायाः प्रस्थानकौतुकं निर्वर्तयितुं ।

अनसूया । सखि । कथमेतत् ।

प्रियंवदा । शृणिवदानीं । सुखशयितप्रच्छिका शकुन्तलासकाशं गतास्मि ।

अनसूया । ततस्ततः ।

प्रियंवदा । तावदेनां लज्जावनतमुखीं परिष्वज्य स्वयं तातकाश्यपेनैवमभिनन्दितं । दिष्ट्या । धूमाकुलितदृष्टेरपि यजमानस्य पावक एवाहुतिः पतिता । वत्से । सुशिष्यपरिदत्ता

॥ पत्रं ४८ ॥

इव विद्याशोचनीया संवृत्ता । अद्यैवर्षिप्रतिरक्षितां त्वां भर्तुः सकाशं विसर्जयामीति ।

अनसूया । अथ केन सूचितस्तातकाश्यपस्य वृत्तान्तः ।

प्रियंवदा । अग्निशरणं प्रविष्टस्य शरीरं विना छन्दोमय्या वाचया ।

अनसूया । कथय ।

अनसूया । सखि । प्रियं मे । प्रियं मे । किंत्वद्यैव शकुन्तला नीयत इत्युत्कण्ठासाधारणं परितोषमनुभवामि ।

प्रियंवदा । सखि । आवां तावदुत्कण्ठां विनोदयिष्यावः । सा तपस्विनी निर्वृता भवतु ।

अनसूया । तेन ह्येतस्मिंश्चूतशाखावलम्बिते नारिकेरसमुद्गक एतन्निमित्तमेव कालान्तरक्षमा निक्षिप्ता मया केसरमालिका । तदिमां हस्तसंनिहितां कुरु । यावदहमप्यस्या मृगलोचनायास्तीर्थमृत्तिकां दूर्वाकिसलयानीति मङ्गलसमालम्भनानि विरचयामि ।

प्रियंवदा । तथा क्रियतां ।

प्रियंवदा । अनसूये । त्वरय त्वरय । एते खलु हस्तिनापुरगामिण ऋषयः शब्दाय्यन्ते ।

॥ पत्रं ४९ ॥

अनसूया । सखि । एहि । गच्छावः ।

प्रियंवदा । एषा सूर्योदय एव शिखामार्जिता प्रतीच्छितनीवारहस्ताभिः स्वस्तिवाचनिकाभिस्तापसीभिरभिनन्द्यमाना शकुन्तला तिष्ठति । उपसर्पाव एनां ।

तापसीनामन्यतमा । जाते । भर्तुर्बहुमानसूचकं महादेवीशब्दं लभस्व ।

द्वितीया । वत्से । वीरप्रसविनी भव ।

तृतीया । वत्से । भर्तुर्बहुमता भव ।

सख्यौ । सखि । सुखमार्जनं ते भवतु ।

शकुन्तला । स्वागतं मे सखीभ्यां । इतो निषीदतं ।

उभे । हला । सज्जा भव । यावन्मङ्गलसमालम्भनं विरचयावः ।

शकुन्तला । एतदपि बहुमन्तव्यं । दुर्लभमिदानीं मे सखीमण्डनं भविष्यति ।

उभे । सखि । उचितं न ते मङ्गलकाले रोदितुं ।

प्रियंवदा । आभरणोचितं रूपमाश्रमसुलभैः प्रसाधनैर्विप्रकार्यते ।

॥ पत्रं ५० ॥

गौतमी । वत्स नारद । कुत एतत् ।

गौतमी । किं मानसी सिद्धिः ।

प्रियंवदा । हला । अनयाभ्युपपत्त्या सूचिता ते भर्तुर्गृहे ऽनुभवितव्या राजलक्ष्मीः ।

सख्यौ । अये । अनुपयुक्तभूषणो ऽयं जनः । चित्रकर्मपरिचयेनाङ्गेषु त आभरणविनियोगं कुर्वः ।

शकुन्तला । जाने वां नैपुणं ।

॥ पत्रं ५१ ॥

सख्यौ । हला शकुन्तले । अवसितमण्डनासि । परिधत्स्व सांप्रतं क्षौमयुगलं ।

गौतमी । जाते । एष त आनन्दपरिवाहिना चक्षुषा परिष्वजमान इव गुरुरुपस्थितः । आचारं तावत्प्रतिपद्यस्व ।

शकुन्तला । तात । वन्दे ।

गौतमी । भगवन् । वरो खल्वेषः । नाशीः ।

॥ पत्रं ५२ ॥

गौतमी । जाते । ज्ञातिजनस्निग्धाभिरनुज्ञातगमनासि तपोवनदेवताभिः । प्रणम भगवतीभ्यः ।

॥ पत्रं ५३ ॥

शकुन्तला । हला प्रियंवदे । नन्वार्यपुत्रदर्शनोत्सुकाया अप्याश्रमं परित्यजन्त्या दुःखदुःखेन मे चरणौ पुरतो प्रवर्तेते ।

प्रियंवदा । न केवलं तपोवनविरहकातरा सख्येव । त्वयोपस्थितवियोगस्य तपोवनस्यापि तावत्समवस्था दृश्यते ।

उद्गलितदर्भकवला मृगः परित्यक्तनर्तना मयूराः । अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः ॥

शकुन्तला । तात । लताभगिनीं वनज्योत्स्नां तावदामन्त्रयिष्ये ।

शकुन्तला । वनज्योत्स्ने । चूतसंगतापि मां प्रत्यालिङ्गेतोगतैः शाखाबाहुभिः । अद्य प्रभृति दूरपरिवर्तिनी ते खलु भविष्यामि ।

शकुन्तला । हला । एषा द्वयोर्वां हस्ते निक्षेपः ।

सख्यौ । अयं जनः कस्य हस्ते समर्पितः ।

॥ पत्रं ५४ ॥

शकुन्तला । तात । एषोटजपर्यन्तचारिणी गर्भमन्थरा मृगबधूर्यदानघप्रसवा भवति । तदा मे कमपि प्रियनिवेदयितारं विसर्जयिष्यथ ।

शकुन्तला । को नु खल्वेष निवसने मे सज्जति ।

शकुन्तला । वत्स । किं सहवासपरित्यागिनीं मामनुसरसि । अचिरप्रसूतया जनन्या विना विवर्धित एव । इदानीमपि मया विरहितं त्वां तातश्चिन्तयिष्यति । निवर्तस्व तावत् ।

॥ पत्रं ५५ ॥

शकुन्तला । हला । प्रेक्षस्व नलिनीपत्रान्तरितं प्रियसहचरमपश्यन्त्यातुरा चक्रवाक्यारटति । दुष्करमहं करोमीति ।

अनसूया । सखि । मैवं मन्त्रयस्व ।

एषापि प्रियेन विना गमयति रजनीं विषाददीर्घतरां ।
गुर्वपि विरहदुःखमाशाबन्धः साहयति ॥

॥ पत्रं ५६ ॥

गौतमी । इयन्बधूजनस्योपदेशः । जाते । एतत्खलु सर्वमवधारय ।

शकुन्तला । तात । इत एव प्रियंवदामिश्राः सख्यो निवर्तिष्यन्ते ।

शकुन्तला । कथमिदानीं तातस्याङ्कात्परिभ्रष्टा मलयतटोन्मूलिता चन्दनलतेव देशान्तरे जीवितं धारयिष्यामि ।

शकुन्तला । हला । द्वे अपि मां सममेव परिष्वजेथां ।

सख्यौ । सखि । यदि नाम स राजा प्रत्यभिज्ञानमन्थरो भवेत् । ततो ऽस्मायिदमात्मनामधेयाङ्कितमंगुलीयकं दर्शय ।

शकुन्तला । अनेन संदेहेन वामाकम्पितास्मि ।

॥ पत्रं ५७ ॥

सख्यौ । मा बिभीहि । स्नेहः पापशङ्की ।

शकुन्तला । तात । कदा नु भूयस्तपोवनं प्रेक्षिष्ये ।

गौतमी । जात । परिहीयते गमनवेला । निवर्तय पितरं । अथवा । चिरेणापि पुनः पुनरेषैवं मन्त्रयिष्यते । निवर्ततां भवान् ।

शकुन्तला । तपश्चरणपीडितं तातशरीरं । तन्मातिमात्रं मम कृत उत्कण्ठितुं ।

सख्यौ । हा धिक् । हा धिक् । अन्तर्हिता शकुन्तला वनराज्या ।

॥ पत्रं ५८ ॥

उभे । तात । शकुन्तलाविरहितं शून्यमिव तपोवनं कथं प्रविशावः ।

॥ पत्रं ५९ ॥

विदूषकः । भो भो वयस्य । संगीतशालान्तरे ऽवधारणं देहि । कलविशुद्धायां गीत्यां स्वरसंयोगः श्रूयते । जाने । तत्रभवती हंसपदिका वर्णपरिचयं करोतीति ।

आकाशे गीयते । अभिनवमधुलोलुपस्त्वं तथा परिचुम्ब्य चूतमञ्जरीं ।

कमलवसतिमात्रनिर्वृतो मधुकर विस्मृतो ऽस्येनां कथं ॥

विदूषकः । किं तावद्गीत्या अवगतो ऽक्षरार्थः ।

विदूषकः । यद्भवानाज्ञापयति । भो वयस्य । गृहीतस्य तया परकीयैर्हस्तैः शिखण्डके ताड्यमानस्याप्सरसा

॥ पत्रं ६० ॥

वीतरागस्येव नास्तीदानीं मे मोक्षः ।

विदूषकः । का गतिः ।

॥ पत्रं ६१ ॥

प्रतीहारी । इत इतो देवः ।

॥ पत्रं ६२ ॥

प्रतीहारी । अभिनवसंमार्जनसश्रीकः संनिहितहोमधेनुरग्निशरणालिन्दः । आरोहतु देवः ।

प्रतीहारी । सुचरितनन्दिन ऋषयो देवं सभाजयितुमागता इति तर्कयामि ।

॥ पत्रं ६३ ॥

शकुन्तला । अहो । किं मे वामेतरं नयनं विस्फुरति ।

गौतमी । जात । प्रतिहतममङ्गलं । शुभानि ते भर्तृकुलदेवता वितरन्तु ।

॥ पत्रं ६४ ॥

प्रतीहारी । देव । प्रसन्नमुखवर्णा दृश्यन्ते । जानामि । विस्रब्धकार्या ऋषयः ।

प्रतीहारी । देव । कुतूहलगर्भः प्रहितो न मे तर्कः प्रसरति । ननु दर्शनीया पुनरस्या आकृति लक्ष्यते ।

शकुन्तला । हृदय । किमेवं वेपसे । आर्यपुत्रस्य भावमवधार्य धीरं तावद्भव ।

॥ पत्रं ६५ ॥

गौतमी । आर्य । किमपि वक्तुकामास्मि । न मे वचनावसरो ऽस्ति । कथमिति ।

नापेक्षितो गुरुजनो ऽनया न खलु पृष्टो बन्धुजनः । एकैकमेव चरिते भणामि किमेकमेकस्य ॥

शकुन्तला । किं नु खल्वार्यपुत्रो भणति ।

शकुन्तला । पावकः खलु वचनोपन्यासः ।

॥ पत्रं ६६ ॥

शकुन्तला । हृदय । सांप्रतं त आशङ्का ।

गौतमी । जाते । मुहूर्तं मा लज्जस्व । अपनेष्यामि तावत्ते ऽवगुण्ठनं । ततस्त्वां भर्ताभिज्ञास्यति ।

प्रतीहारी । अहो धर्मापेक्षिता भर्तुः । ईदृशं नाम सुखोपनतं रूपं प्रेक्ष्य को ऽन्यो विचारयति ।

शकुन्तला । आर्यस्य परिणय एव संदेहः । कुत इदानीं मे दूराधिरोहिण्याशा ।

॥ पत्रं ६७ ॥

शकुन्तला । इदमवस्थान्तरं गते तादृशे ऽनुरागे किं वा स्मारितेन । आत्मेदानीं शोचनीय इति व्यवसितं । आर्यपुत्र । संशयित इदानीं परिणये नैष समुदाचारः । पौरव । न युक्तं नाम ते तथा पुरा आश्रमपदे स्वभावोत्तानहृदयमिमं जनं समयपूर्वं प्रतार्येदृशैरक्षरैः प्रत्याख्यातुं ।

शकुन्तला । भवतु । यदि परमार्थतः परपरिग्रहशङ्किना त्वयैवं प्रवृत्तं । तदभिज्ञानेनानेन तवाशङ्कामपनेष्यामि ।

शकुन्तला । हा धिक् । हा धिक् । अंगुलीयकशून्या मे ऽङ्गुलिः ।

गौतमी । नूनं ते शक्रावताराभ्यन्तरे शचीतीर्थसलिलं वन्दमानायाः प्रभ्रष्टमंगुलीयकं ।

॥ पत्रं ६८ ॥

शकुन्तला । अत्र तावद्विधिना दर्शितं प्रभुत्वं । अपरं ते कथयिष्यामि ।

शकुन्तला । नन्वेकस्मिन्दिवसे नवमालिकामण्डपे नलिनीपत्रभाजनगतमुदकं तव हस्ते संनिहितमासीत् ।

शकुन्तला । तत्क्षणं स मे पुत्रकृतको दीर्घापाङ्गो नाम मृगपोतक उपस्थितः । त्वयायं तावत्प्रथमं पिबत्वित्यनुकम्पिनोपच्छन्दित उदकेन । न पुनस्ते ऽपरिचयाद्धस्ताभ्यासमुपगतः । पश्चात्तस्मिन्नेव मया गृहीते सलिले ऽनेन कृतः प्रणयः । तदा त्वमित्थं प्रहसितो ऽसि । सर्वः सगन्धेषु विश्वसिति । द्वावप्यत्रारण्यकाविति ।

गौतमी । महाभाग । नार्हस्येवं मन्त्रयितुं । तपोवनसंवर्धितो ऽनभिज्ञो ऽयं जनः कैतवस्य ।

शकुन्तला । अनार्य । आत्मनो हृदयानुमानेन प्रेक्षसे । क इदानीमन्यो धर्मकञ्चुकप्रवेशिनस्तृणाच्छन्नकूपोपमस्य

॥ पत्रं ६९ ॥

तवानुकृतं प्रतिपत्स्यते ।

शकुन्तला । सुष्ठु तावदत्र स्वच्छन्दचारिणी कृतास्मि । याहमस्य पुरुवंशप्रत्ययेन मुखमधोर्हृदयस्थित विषस्य हस्ताभ्यासमुपगता ।

॥ पत्रं ७० ॥

शकुन्तला । कथमनेन कितवेन विप्रलब्धास्मि । यूयमपि मां परिदेविनीं परित्यजथ ।

गौतमी । वत्स शार्ङ्गरव । अनुगच्छतीयं खलु नः करुणापरिदेविनी शकुन्तला । प्रत्यादेशपरुषे भर्तरि किं वा मे पुत्री करिष्यति ।

॥ पत्रं ७१ ॥

शकुन्तला । भगवति वसुधे । देहि मे विवरं ।

॥ पत्रं ७२ ॥

प्रतीहारी । इत इतो देवः ।

॥ पत्रं ७३ ॥

रक्षिणौ । अरे कुम्भिल । कथय । कुत्र त्वयैतन्मणिबन्धनोत्कीर्णनामधेयं राजकीयमंगुलीयकं समासादितं ।

पुरुषः । प्रसीदन्तु भावमिश्राः । अहं नेदृशकर्मकारी ।

प्रथमः । किं खलु शोभनो ब्राह्मण इति कृत्वा राज्ञा प्रतिग्रहो दत्तः ।

पुरुषः । शृणुतेदानीं । अहं शक्रावताराभ्यन्तरवासी धीवरः ।

द्वितीयः । पाटच्चर । किमस्माभिर्जातिं पृष्टः ।

श्यालः । सूचक । कथयतु सर्वमनुक्रमेण । मैनमन्तरा प्रतिबध्नीतं ।

उभौ । यदावुत्त आज्ञापयति । कथय ।

पुरुषः । अहं जालोद्गारादिभिर्मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि ।

श्यालः । विशुद्ध इदानीमाजीवः ।

पुरुषः । भर्तः । मैवं भण ।

॥ पत्रं ७४ ॥

सहजं किल यद्विनिन्दितं
न खलु तत्कर्म विवर्जनीयं ।
पशुमारणकर्म दारुण
मनुकम्पामृदुरेव श्रोत्रियः ॥

श्यालः । ततस्ततः ।

पुरुषः । एकस्मिन्दिवसे खण्डशो रोहितमत्स्यो मया कल्पितो यावत् । तस्योदराभ्यन्तर एतद्रत्नभासुरमंगुलीयकं दृष्टं । पश्चादहमस्य विक्रयाय दर्शयन्गृहीतो भावमिश्रैः । मारयत वा । मुञ्चत वा । अयमस्यागमवृत्तान्तः ।

श्यालः । जानुक । विस्रगन्धिर्गोधाती मत्स्यबन्ध एव निःसंशयं । अंगुलीयकदर्शनमस्य विमर्ष्टव्यं । राजकुलमेव गच्छामः ।

रक्षिणौ । तथा ।

श्यालः । गच्छारे गण्डभेदक ।

श्यालः । सूचक । इमं पुरद्वारे ऽप्रमत्तौ प्रतिपालयतं । यावदिदमंगुलीयकं यथागमनं भर्तुर्निवेद्य ततः शासनं प्रतीष्य निष्क्रमामि ।

उभौ । प्रविशत्वावुत्तः स्वामिप्रसादाय ।

प्रथमः । जानुक । चिरायति खल्वावुत्तः ।

द्वितीयः । नन्ववसरोपसर्पणीया राजानः ।

प्रथमः । जानुक । स्फुरन्ति मे हस्तावस्य बध्यस्य सुमनः

॥ पत्रं ७५ ॥

पिनद्धुं ।

पुरुषः । नार्हति भावो ऽकारणमारणो भवितुं ।

द्वितीयः । एष नौ स्वामी पत्रहस्तो राजशासनं प्रतीष्येतोमुखो दृश्यते । गृध्रबलिर्भविष्यसि । शिशुनो मुखं वा द्रक्ष्यसि ।

श्यालः । सूचक । मुच्यतामेष जालोपजीवः । उपपन्नः किलायमंगुलीयकस्यागमः ।

सूचकः । यथावुत्तो भणति ।

द्वितीयः । एष यमसदनं प्रविश्य प्रतिनिवृत्तः ।

पुरुषः । भर्तः । अथ कीदृशो म आजीवः ।

श्यालः । एष भर्त्रांगुलीयकमूल्यसंमितः प्रसादो ऽपि दापितः ।

पुरुषः । भर्त्रानुगृहीतो ऽस्मि ।

सूचकः । एष नामानुग्रहः । यः शूलादवतार्य हस्तिस्कन्धे प्रतिष्ठापितः ।

जानुकः । आवुत्त । परितोषं कथय । तेनांगुलीयकेन भर्तुः संमतेन भवितव्यं ।

श्यालः । न तस्मिन्महार्हं रत्नं भर्तुर्बहुमतमिति तर्कयामि । तस्य दर्शने भर्तुरभिमतो जनः स्मृतः । मुहूर्तं प्रकृतिगम्भीरो ऽपि पर्यश्रुनयन आसीत् ।

सूचकः । सेवितं नामावुत्तेन ।

॥ पत्रं ७६ ॥

जानुकः । ननु भण । अस्य कृते मत्स्यिकाभर्तुरिति ।

पुरुषः । भट्टारकाः । इतो ऽर्धं युष्माकं सुमनोमूल्यं भवतु ।

जानुकः । इयद्युज्यते ।

श्यालः । धीवर । महत्तरस्त्वं प्रियवयस्य इदानीं मे संवृत्तः । कादम्बरीसाक्षिकमस्माकं प्रथमसौहृदमिष्यते । तच्छौण्डिकापणमेव गच्छामः ।

सर्वे । तथा ।

॥ पत्रं ७७ ॥

सानुमती । निर्वर्तितं मया पर्यायनिर्वर्तनीयमप्सरस्तीर्थसांनिध्यं । यावत्साधुजनस्याभिषेककाल इति सांप्रतमस्य राजर्षेरुदन्तं प्रत्यक्षीकरिष्यामि । ननु मेनकासंबन्धेन शरीरभूतेदानीं मे शकुन्तला । तया च दुहितृनिमित्तमादिष्टपूर्वास्मि । किं नु खल्वृतूत्सवे ऽपि निरुत्सवारम्भमिवैतद्राजकुलं दृश्यते । अस्ति मे

